आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९८

# धर्मतत्त्वनिर्णयपरिशिष्टम् ।

वे० शा० सं० रा० महामहोपाध्यायाभ्यंकरो-
पाह्ववासुदेवशास्त्रिप्रणीतम् ।

तदिदं ।

वे० शा० सं० रा० मारुलकरोपाह्वरङ्गनाथभट्टात्मज-
शंकरशास्त्रिभिः संशोधितम् ।

एतत्पुस्तकं

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५७ ।

खिस्ताब्दाः १९३५ ।



मूल्यं त्रयोदशाऽऽणकाः (८१३) ।

# प्रास्ताविकं किंचित् ।

पायादपायाज्जगदीश्वरो वः ।

विदितमस्त्येवैतत्तत्रभवतां विपश्चितां धर्मैकप्रवणचेतसाम् । यदिन्द्विषु-वसुभूमिते( १८५१ ) शकाब्दे म. म. अभ्यंकरोपाह्ववासुदेवशास्त्र्युपज्ञं धर्मतत्त्वनिर्णयाभिख्यो निबन्ध आनन्दाश्रममुद्रणालये स्वात्मानमासादितवानिति । तत्प्रास्ताविकगतां पद्धतिमनुसृत्य न कोऽपि तत्र शास्त्रानुसारिण आक्षेपान्ग्रहीतुमुत्सहते स्म । किंत्वकृतशास्त्रपरिश्रमाणामपि व्यवहारसरणिनिपुणानां केषांचित्प्रलापान् 'धर्मस्याथ च जातेः परिवर्तनार्हत्वं, तच्च पुनः शास्त्रसिद्धम्, आवश्यकं च सांप्रतं परिस्थित्यनुसारेण तत्परिवर्तनम्' इत्येवमादिकान्समाकर्ण्य कलिकालवशाच्छास्त्रतत्त्वानवगाहित्वात्तेषां संभ्रान्तत्वात्तैरस्माभिरेव पुनर्व्यज्ञपयिषत शास्त्रमर्मवेधैकनिपुणमतयः पण्डितप्रवरवासुदेवशास्त्रिणः केषुचिद्विषयेषु । तेनैतद्धर्मतत्त्वनिर्णयपरिशिष्टमुदगात् । एतेन धर्मतत्त्वनिर्णयप्रणयने यद्बीजं तदेवास्यापि निमित्तमित्युक्तं भवति। अस्याऽऽविर्भावे सति सहस्रभानूदये घनतमस्काण्डमिवाकाण्डताण्डवं निरर्गलसंगिरणनिपुणानां विलीय क्वापि गच्छति तन्न ज्ञायते । तदेतद्विशदीकर्तुं शास्त्रानुसारी धर्मपरिवर्तनजातिपरिवर्तनयोर्विचारः प्रस्तूयते—

तत्रादौ 'धर्मं चर, तानि धर्माणि प्रथमान्यासन्, वेदोऽखिलो धर्ममूलम्' इत्यादिश्रुतिस्मृतिषु प्रयुक्तस्य धर्मशब्दस्य कोऽर्थ इति जिज्ञासायां भगवान्सुगृहीतनामा जैमिनिमहर्षिरित्थं सूत्रयांबभूव—'चोदनालक्षणोऽर्थो धर्मः' (पू. मी. १।१।२) इति । अनेन सूत्रेण धर्मलक्षणं तत्प्रामाण्यं च प्रदर्शितम् । चोदनेति प्रवर्तकः शब्दः । तदुक्तं भाष्यकारेण शबरस्वामिना—'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः' इति । लक्ष्यतेऽनेनेति लक्षणम् । तथा च वेदतदविरुद्धस्मृतिसदाचारादिबोधितेष्टसाधनत्वरूपोऽर्थो धर्म इति सूत्राशयः। एतत्सूत्राक्षरानुगुण्येनैवालौकिकश्रेयःसाधनत्वेन विहितत्वं ( विहितक्रियात्वं वा ) धर्मत्वमिति धर्मलक्षणं भाट्टानुयायिनो मन्यन्ते स्म । एतद्विरोधेनालौकिकानिष्टसाधनत्वेन विहितत्वमधर्मत्वमित्येवमधर्मलक्षणमपि प्रतिपादितं भवति ।

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥

इति नञर्थस्य विरोधित्वेनाभिधानात् 'नञश्चैवं स्वभावो यत्समभिव्याहृतपदार्थविरोधित्वे धक्कत्वम्' इत्यर्थसंग्रहोक्तेश्चाधर्मस्य धर्मविरोधित्वात् ।

स च धर्मो द्विविधः । प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च द्विविधस्यापि तस्य लक्षणमुक्तं महाभारते—

'प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः' इति ।

पुनरावृत्तिः पुनर्जन्म संसारप्रवृत्तिरित्यर्थः । निवृत्तिरपुनर्जन्म संसारनिवृत्तिर्मोक्ष इति यावत् । तत्फलमपि द्विविधम् । तदुक्तम्—

प्रवृत्तिलक्षणे धर्मे फलमभ्युदयो मतः ।
निवृत्तिलक्षणे धर्मे फलं निःश्रेयसं मतम् ॥ इति ।

भविष्यपुराणेऽपि—

अस्य सम्यगनुष्ठानात्स्वर्गो मोक्षश्च जायते ।
इह लोके सुखैश्वर्यमतुलं च खगाधिप ॥ इति च ।

एवमादिभिः परःशतैर्वचोभिरैहिकामुष्मिकाखिलातुलैश्वर्यादिसमवस्थितिहेतुत्वेन श्रुतिस्मृत्याद्यनुमोदितो धर्म एव सिद्धान्तितो दरीदृश्यते ।

सत्यमित्थं महाभागः सनातनो भगवान्वैदिको धर्म इति नात्र विशयलेशोऽपि । सोऽयं धर्मश्चातुर्वर्ण्यचातुराश्रम्यादिविभागव्यवस्थयाऽनेकभेदभिन्नोऽपि व्यवस्थित एव शास्त्रेषु दृश्यते । अव्यवस्थितत्वे 'एष सेतुर्विधरणः' इति श्रुत्युक्ताविधरणासंभवेन धर्मत्वस्यैवानापत्तेः । सत्यप्येवं केचित्कलिकालकलुषितमतयो दुराचारमेव सदाचारं मन्यमाना दुर्ज्ञानग्रहाविष्टा इव शास्त्राण्यवधीरयन्त उन्मत्ता इवायुक्तप्रलापिनः संजातभ्रमा इव भगवन्तं सुखोदर्कमपि धर्मं कष्टप्रायं दुःखमयं च जानाना दौर्भाग्यवशादप्राप्यसमाप्तनष्टचर्या इव च सर्वानर्थहेतुमपि धर्मविपर्ययं रत्नशङ्कया खदिराङ्गारं जिघृक्षन्तीत्यहो जितं व्यामोहविलासेन ।

यद्यपि धर्मः क्षरति कीर्तनादित्यादौ वैशेषिकनये च क्रियाजन्यादृष्टे धर्माधर्मशब्दः प्रयुक्तो दृश्यते। तथाऽपि धर्मः स्वनुष्ठितः पुंसामित्यादौ तज्जनकविहितनिषिद्धक्रियादावपि तच्छब्दप्रयोगस्य बहुधा दृष्टत्वादलौकिकश्रेयःसाधनत्वेन विहितक्रियारूपमर्थमुपादायैतर्हि परिवर्तनचर्चा प्रवृत्ता संलक्ष्यते। अतस्तमेव धर्मशब्दार्थमधिकृत्य तत्परिवर्तनविचारः प्रवर्त्यते—

करालकलिकालसमुपजनितदुरवस्थासरण्याऽवनतिततिसोपानमधोऽधोऽवतरतोऽस्य धर्मस्य परिवर्तनं कीदृशमभिप्रेयते भवता। अन्यानुष्ठेयस्य तस्यान्यानुष्ठेयत्वकल्पनमिति चेत्—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥

इति याज्ञवल्क्योक्तः सर्वसाधारणो धर्मो मनुष्यमात्रेणानुष्ठातुं योग्यत्वाद्विपरिवर्तितोऽपि 'सरसो विपरीतोऽपि सरसत्वं न मुञ्चति' इति न्यायान्न विपरिवृत्ततां भजते।

अथ ब्राह्मणत्वावच्छिन्नेनानुष्ठेयस्य तस्य क्षत्रियत्वावच्छिन्नेनानुष्ठेयत्वं तदिति चेत्—

ब्राह्मणत्वावच्छिन्नेनानुष्ठातुं योग्यानां स्वाध्यायाध्ययनयजनदानानां क्षत्रियत्वावच्छिन्नेनानुष्ठानस्य योग्यत्वान्न तान्यपि परिवर्तितानि भवन्ति।

यदि तु ब्राह्मणत्वाद्यवच्छिन्नोद्देश्यतानिरूपितविधेयताविशिष्टस्य तस्योद्देश्यतावच्छेदकाभावसमानाधिकरणब्राह्मणत्वाद्यवच्छिन्नेनानुष्ठेयत्वं तदिति मन्येथास्तदपि त्वया वक्तुमशक्यम्।

यतो ब्राह्मणत्वप्रयुक्तस्य स्वाध्यायाध्ययनादेरग्निहोत्रादेरग्निसाध्यस्य कर्मणः संस्कारस्योपनयनादेश्च 'पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्' 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' 'शूद्रश्चतुर्थो वर्ण एकजातिः' 'न च संस्कारमर्हति' इत्यादिश्रुतिस्मृतिभिः शूद्रानुष्ठेयत्वस्य स्पष्टं प्रतिषिद्धत्वात्। क्षत्रियधर्माणां राजसूयादीनां वैश्यधर्माणां वैश्यस्तोमादीनां च ब्राह्मणत्वावच्छिन्नानुष्ठेयत्वानवगमाच्च।

यदि पुनर्निरुक्तरीत्या धर्मपरिवर्तनमभीष्टं स्यात्तर्हि तादृशनिषेध-बोधकश्रुतिस्मृत्यादीनां नैष्फल्यरूपमप्रामाण्यमापद्येत। ततश्च प्रामाण्यान्यथानुपपत्त्या धर्मपरिवर्तनं न शास्त्रसंमतमित्यवगम्यते। नहि सहस्रांशोरिव स्वतःसिद्धं भगवतो वेदराशेः प्रामाण्यमन्यथयितुं कोऽपि प्रभवति। नहि परःशतान्यपि वचनानि घटान्पटयितुं पटांश्च वा घटयितुं शक्नुवन्ति। नहि वा परःसहस्रा अपि कौशिकघटा भगवन्तमंशुमालिनमप्रमाणीकर्तुमीशते। एवं च कलिकालवशाद्विकृतमतिभिः कैश्चिदाधुनिकैश्चिकीर्षितं धर्मपरिवर्तनं नैव संभवति।

अथ नास्तिकतया भगवति वेदे नो विश्वसिषि तर्ह्येवं प्रष्टव्योऽसि। निरुक्तधर्मपरिवर्तनेन कोऽर्थस्तत्र प्रार्थ्यते।

उत्तरोत्तरं हीनानां क्षत्रियादीनां निरतिशयश्रैष्ठ्यप्रयोजिका ब्राह्मण्यप्राप्तिरिति चेत्किं ततः। हीनोत्कृष्टभावापगमेन सर्वेषां समीकरणमिति चेत्। तुल्यन्यायात्पूर्वं पूर्वं श्रेष्ठानां वैश्यादीनां ब्राह्मणपर्यन्तानां निरतिशयहीनत्वप्रयोजिका एकजातित्वप्राप्तिरनिष्टाऽऽपततीति निकृष्ट उत्कृष्टतां गत उत्कृष्टश्च निकृष्टतां गत इति केवलं व्यत्ययस्य पूर्ववत्सम-वस्थित एव हीनोत्कृष्टभावः।

किंच चतुर्णां वर्णानां मध्ये सर्वतः प्रथमे भूदेवे यच्छ्रेष्ठत्वप्रयोजकं ब्राह्मणत्वं जगति विश्रुतं तत्किं धर्माचरणमूलकं मन्यसेऽथवा तादृशकुलजन्ममूलकम्

नाऽऽद्यः। ‘ चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां पूर्वः पूर्वो जन्मतः श्रेयान् ’ इति सत्याषाढहिरण्यकेशिधर्मसूत्र उज्ज्वलाख्याख्याकृता ‘ अत्र जन्मत इति वचनात्सद्वृत्तादपि शूद्राद्वैश्यब्रुवोऽपि श्रेयान्। एवं वैश्यात्क्षत्रियः। क्षत्रियाद्ब्राह्मणः ’ इत्युक्तत्वेन श्रेष्ठत्वप्रयोजके ब्राह्मणत्वे धर्माचरणमूलकत्वनिरासपूर्वकं तादृशकुललब्धजन्मनिबन्धनत्वस्य स्पष्टं प्रतिपादितत्वात्। अन्त्ये धर्माचरणाप्रयुक्तस्य तस्य सुतरां धर्मानुष्ठानलभ्यत्वाभावः।

अथेत्थं महामहिमशाल्यप्रतिहतप्रभावो वैदिको धर्मः स किं खलसङ्क्रान्तिमेति, अथवा खलेषु कुण्ठितसामर्थ्यो भवति। यतस्तैरनुष्ठीयमानो

न तानवनतिपङ्कादुद्दिधीर्षति । नहि श्रीमांश्चण्डभास्करश्चण्डालगृहान्न स्पृशति न वा प्रकाशयति । नह्येतावता स स्वयमपवित्रतामुपयाति । कोऽयं पक्षपातस्तत्रभवतो वैदिकधर्मस्य द्विजातिषु यत्तानेवाभिनीयते नेकजातीन् । द्युमणिसमश्चिन्तामणिर्यत्र क्वापि संकरावकीर्णे प्रदेशे लुठतु न कदाऽपि तेजोहानिं समनुभवति । प्रत्युत स्वतेजस्विताभाविर्भावयत्येव स्वसंसर्गिषु, इत्यादीन्बालसंमोहनपरानज्ञानविलासानसमुल्लासयसि चे-द्धन्तैवं तुष्यतु दुर्जनन्यायावसरः । तथा च स्वीकृतेऽपि तादृशधर्माचर-णस्य ब्राह्मण्यप्रयोजकत्वे नेषदपीष्टलाभस्तत्र यतो विध्यङ्गभूताधिका-रिसमवेतधर्माचरणस्यैव फलसाधनत्वं नानधिकारिगतधर्माचरणस्येति श्रुतिस्मृतिभ्यो नियमावगमात् । नह्यनेकाङ्कुरजननसमर्थमपि बीजमूषर-भूमिमङ्कुरिणीं करोति । स हि क्षेत्रस्यैव दोषो न बीजस्य, यदन्य-त्रानेकाङ्कुराञ्जनयदप्यूषरभूमौ नाङ्कुरमासादयतीति । तदुक्तं मनुना—

‘ यथेरिणे बीजमुप्त्वा न वप्ता फलमश्नुते ’ इति ।

‘ न वा स्वातीसलिलं मुक्तास्फोटेभ्योऽन्यत्र पतितं मौक्तिकं संपद्यते ’ इति । तथा च तादृशधर्माचरणस्याधिकारिसमवेतत्वसंपत्त्यर्थं धर्मानुष्ठा-नात्पूर्वमेव ब्राह्मण्यस्य सिद्धत्वेनापेक्षणान्न ब्राह्मण्यं ब्राह्मणधर्मानुष्ठान-मूलकम् । न केवलं विपर्ययेणानुष्ठितो धर्मः फलाय न कल्पत इत्येव किंत्वधःपतनकरोऽपि । तदुक्तम्—

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥

गीतायामप्युक्तम्—‘ परधर्मो भयावहः ’ इति । तस्मात्फलाभावाद्भ-यावहत्वाच्च दुरन्तोऽयं संरम्भो यद्धर्मपरिवर्तनं नाम ।

किंच ब्राह्मण्यस्य ब्राह्मणधर्माचरणजन्यत्वे सति दुरुद्धरोऽन्योन्या-श्रयप्रसङ्गः । तथा हि—सति हि ब्राह्मण्ये ब्राह्मणधर्माचरणं, सति च तादृशधर्माचरणे ब्राह्मण्यमिति मिथोऽपेक्षितत्वेन धर्माचरणानिष्पादात्तव मते ब्राह्मणत्वस्य शशशृङ्गायमाणत्वापत्तेः ।

एतेन ब्राह्मणानां धर्मः शूद्रेणाऽऽचरितश्चेत्स शूद्रस्तत्कालं ब्राह्मणो भवतीत्यनुसंदधानाः केचिददूरदर्शिन आधुनिका निरुक्तलक्षणधर्म-परिवर्तनं चिकीर्षवः परास्ता वेदितव्याः ।

यत्तूच्यते—समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥
देवराद्यैः सुतोत्पत्तिर्मधुपर्के पशोर्वधः ।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥

इत्याद्युक्त्वा ' इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ' इति कलिवर्ज्यप्रकरणे स्मृतिषु पुराणेषु च विहितानामपि केषांचित्कर्मणां निषेधस्य प्रतिपादनाद्धर्मः परिवर्तनशील इत्यनुमीयते। यदि पुनर्धर्मः परिवर्तनशीलो न भवेत्तर्हि तन्निषेधकरणमनुपपन्नं स्यात् । तस्यायं भावः—असवर्णकन्योपयमादिः कृतादियुगत्रये पुण्यजनकत्वेन धर्म आसीत् । स एव चैषमः कलियुगे पापजनकत्वेनाधर्मः संपन्न इति तन्निषेधः कृतः। तथा च धर्मस्वरूपं परिवर्तनशीलमिति स्पष्टमेव प्रतीयते। तत्तुल्यन्यायात्पूर्वस्मिन्युगान्तरे पापजनकत्वेनाधर्मभूतानामस्पृश्यस्पर्शमन्दिरप्रवेशादीनामस्मिन्कलियुगे बहुभिर्जनैरिष्यमाणत्वात्पुण्यजनकत्वेन धर्मत्वं भवितुं युक्तमिति ।

तदेतद्बालसंमोहनमात्रम्। यतः परिवर्तनं नाम द्वयोर्विनिमयः। स च मिथो विरुद्धस्वरूपयोर्द्वयोरन्योन्यस्वरूपापत्तिरूपः। तथा च धर्मस्याधर्मस्वरूपापत्तिरधर्मस्य च धर्मस्वरूपापत्तिरित्यंशद्वयात्मकं परिवर्तनं भवति। यथा स्वर्णपिण्डस्य पिण्डाकारतामुपमृद्य तत्र कुण्डलाकारता निष्पाद्यते कुण्डलाकारतां चोपमृद्य तत्र पिण्डाकारता संपाद्यते । तद्वद्धर्मे धर्मस्वरूपं पुण्यजनकत्वमपगमय्य तत्राधर्मस्वरूपं पापजनकत्वं संपाद्यतेऽधर्मे चाधर्मस्वरूपं पापजनकत्वमपगमय्य तत्र धर्मस्वरूपं पुण्यजनकत्वं यन्निष्पाद्यते तद्धर्मपरिवर्तनम् । एवं च पूर्वयुगान्तरे यः कर्मविशेषः पुण्यजनकतया धर्म आसीत्सोऽस्मिन्युगे पापजनकतयाऽधर्म इत्यनुसंधीयते । तथा यः कर्मविशेष एतावत्कालपर्यन्तं पापजनकतयाऽधर्म आसीत्स इदानीं पुण्यजनकतया धर्म इत्यनुसंधीयते चेत्तदेव धर्मपरिवर्तनं भवेन्न विहितप्रतिषेधमात्रेण । सत्येवं यदि पुनर्धर्मः परिवर्तनशीलः स्यात्तदा पूर्वं ये धर्मा ग्राह्या आसंस्तेषां मध्ये केचित्कलियुगानुसारेणाग्राह्या इत्यनुसंधाय तेषां निषेधः स्मृत्यादिषु प्रदर्शितस्तथा पूर्वं येऽधर्मा इत्यग्राह्या आसंस्तेषां मध्ये केचित्कलियुगानुसारेण ग्राह्या भवेयुरिति तेषां संग्रहः प्रदर्शितः स्यात् । यथा च धर्मनिबन्धकारैः कलिवर्ज्यप्रक-

रणं कृतं तथा कलिसंग्राह्यप्रकरणमपि कृतं स्यादित्यर्थः । यतश्च कलि-संग्राह्यप्रकरणं न कृतं, नैतावदेव किंतु तादृशो नैकोऽपि विषयो धर्म-सूत्रकारैः स्मृत्यादिषु संगृहीतस्ततो धर्मस्यापरिवर्तनशीलत्वमेव तद-संग्रहणं बोधयति । का तर्हि निषेधस्य गतिरिति चेत्परिशिष्टे द्वात्रिं-शत्तमे पृष्ठेऽवलोकनीया । अन्यच्च यावदपेक्षितं तत्सर्वं तत्र सयुक्तिकं सप्रमाणं च विस्तरशो मीमांसितमिति तत एवावधार्यम् । तस्माद्विहित-प्रतिषेधमात्रं परिवर्तनमेव न भवतीति तावता धर्मस्य परिवर्तनशील-त्वमनुमापयन्तः सुतरां भ्रान्ता एवेति बोध्यम् ।

किंच धर्मः परिवर्तनशीलो नैव भवतीत्येतद्भगवदुक्त्याऽपि स्पष्टं भवति । तथा हि—

> यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
> अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥

इत्यर्जुनं प्रति भगवद्वाक्यम् । तत्र पुण्यजनकं विहितं कर्म धर्मः । तादृशधर्मानुष्ठाने बहुजनसमाजस्याप्रवृत्तिर्धर्मग्लानिः । तथा पापजनकं निषिद्धं कर्माधर्मः । तादृशाधर्माचरणे बहुजनप्रवृत्तिरधर्माभ्युत्थानम् । तत्रायमेव धर्मो नायं, तथाऽयमेवाधर्मो नायमित्येवं धर्माधर्मयोः स्वरूप-मपरिवर्तनीयं किंचिन्निश्चितं भवेत्तर्ह्येव धर्माधर्मयोर्बहुजनसमाजाप्रवृत्ति-प्रवृत्तिभ्यां धर्मग्लान्यधर्माभ्युत्थाने वक्तुं संभवेतां नान्यथा । परिवर्त-नवादिना त्वया बहुजनसमाजस्य यत्र यदा प्रवृत्तिर्लक्ष्यते स तदा धर्म इति प्रवृत्त्यनुसारेण भिन्नं भिन्नं धर्मस्वरूपमङ्गी क्रियत इति न कदाऽपि कथमपि धर्मग्लानिरधर्माभ्युत्थानं वा वक्तुं शक्या । यां हि बहुजनसमाज-स्यास्पृश्यस्पर्शादौ प्रवृत्तिं वीक्ष्य धर्मग्लानिरधर्माभ्युत्थानं वा वक्तव्यं-तादृशप्रवृत्तिविषयः सोऽस्पृश्यस्पर्शस्तव मते धर्म इति कथमिवेदमधर्मा-भ्युत्थानमियं धर्मग्लानिरिति त्वया वक्तुं युज्येत । तस्माद्धर्मपरिवर्त-नशीलत्वकल्पनायाः श्रुत्यादिविरुद्धत्वं बोधयन्तीयं भगवदुक्तिर्धर्म-स्यापरिवर्तनशीलत्वमेव द्रढयति । एवं च धर्मपरिवर्तनं नैव भवितु-मर्हतीति सिद्धम् ।

अत्र नव्यशिक्षाविकृतहृदया काचित्प्राणिश्रेणी जातिपरिवर्तनवा-दिनी जातिं गुणकर्मकृतामभिमन्यते । उपढौकयति च तत्र प्रमाणत्वेन गीतास्थं वचनम्—

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' ( भ० गी० ४।१३ ) गुणकर्मणोर्यो विभागस्तमवलम्ब्य मयेश्वरेण ब्राह्मणादयश्चत्वारो वर्णा निर्मिता इति तदर्थादीश्वरकर्तृकचातुर्वर्ण्यसृष्टौ गुणकर्मविभागस्य हेतुत्वेनान्वयमभिप्रैति । ननु 'ब्राह्मणा एवंगुणविशिष्टा एवंकर्माणश्च स्युः' इत्येवं रीत्या जन्मसहभूब्राह्मणत्वादिजातिमत्सु तेषु गुणकर्मणी उपदिश्येते । तथा चैवं पर्यवस्यति—यत्र पाञ्चभौतिके स्थूले मानवशरीरे स्वभावसिद्धं ब्राह्मणकर्म परिदृश्यते स शूद्रकुलोत्पन्नोऽपि ब्राह्मणः । एवं यत्र देहे नैसर्गिकं शूद्रकर्म भवति स द्विजकुलोत्पन्नोऽपि शूद्रः । इत्येवंरीत्या जातेः कर्मनिष्पाद्यत्वेन तत्परिवर्तनं सुलभम् । अत एव श्रीमद्भागवते सप्तमस्कन्धे—

> यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
> यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥

इत्युक्तं संगच्छते । ब्राह्मणलक्षणं यदि शूद्रे समन्वियात्तदा तं शूद्रं ब्राह्मण इति ब्रूयादिति हि तदर्थः । यदि च जन्मनैव ब्राह्मणत्वादिजातिमत्सु तेषु गुणकर्मविभागोपदेशः स्यात्तर्हि सर्वैरपि ब्राह्मणैरव्यभिचारेण—

> 'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
> ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥

इति भगवद्गीतोक्तस्वभावजब्रह्मकर्मवद्भिर्भवितव्यम् । तथा—'परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्' इत्युक्तद्विजातिशुश्रूषात्मकस्वाभाविककर्मपरैः सर्वैः शूद्रैर्भाव्यम् । किंतु न सर्वे सर्वत्र तथा भवन्ति, तस्मात्स्वाभाविकं तपःशौचादिकं ब्राह्मणकर्म यत्र विद्यते स एव ब्राह्मणः । एवमेव क्षत्रियादयोऽपि बोद्धव्याः । जन्मजातब्राह्मणत्वादिकं त्वाधुनिकसनातनिम्मन्यैरुत्प्रेक्षितमिति ।

तत्रेत्थमुच्यते—चातुर्वर्ण्यसृष्टौ गुणकर्मविभागस्य हेतुत्वेन याऽन्वयविवक्षा सा किं हेतुत्वार्थकविभक्तिश्रवणपूर्विकोत स्वतन्त्रा । यद्याद्यः पक्षस्तर्हि गुणकर्मविभागपदोत्तरं हेतुत्वद्योतकविभक्तेरश्रुतिस्तावत्स्पष्टैव । अथ द्वितीयस्तदा स्वातन्त्र्येण गुणकर्मविभागस्य हेतुत्वं कल्प्यत इति चेदश्रद्धेयमेतत् । को हि नाम भगवदुक्तार्थे संशय्य पामरजनकल्पिते तादृशेऽर्थे विश्वस्यात् ।

किंचैवं कल्पितेऽपि वा हेतुत्वे गुणकर्मविभागपदोत्तरं श्रुतस्य शस्प्रत्यय-यस्य कारकविभक्तत्वनताद्विधीयमानस्यानुपपत्तिः। हेतुत्वस्य द्रव्यगुण-क्रियात्मककार्यत्रयनिरूपितत्वे सति निर्व्यापारसव्यापारवृत्तित्वेनोपपद-विभक्तिप्रयोजकार्थत्वेऽपि कारकविभक्तिप्रयोजकार्थत्वाभावात्।

त्वमिवाहमपि गुणकर्मविभागस्य हेतुत्वाभावं कल्पयामीति कस्तत्र मां निवारयितेति त्वमेव विचारयेथाः।

तस्मान्मयेश्वरेण चातुर्वर्ण्यं सृष्टं तस्य च गुणकर्मविभागोऽपि सृष्ट इत्येव तदर्थ इति चातुर्वर्ण्यस्येव गुणकर्मविभागस्यापि सृष्टौ कर्मत्वं प्रतीयते। अत एवैतच्छ्लोकस्यशांकरभाष्यव्याख्यानावसर आनन्द-गिरिभिः 'तेनैव वर्णादेस्तद्व्यापारस्य च सृष्टत्वात्' 'चातुर्वर्ण्यादे-स्तत्कर्मणश्च यद्यपि कर्ताऽहम्' इत्युक्त्या ईश्वरसृष्टौ गुणकर्मविभागस्य कर्मत्वं प्रत्याययितं संगच्छते। संगच्छते च गुणकर्मविभागस्य सर्जन-क्रियां प्रति कर्मत्वेन 'संख्यैकवचनाच्च वीप्सायाम् (पा० सू०५।४।४१) इति कारकाद्विहितस्य शसः श्रवणम्।

अथ गुणकर्मविभागपदोत्तरं श्रुतस्य शसः सामञ्जस्याय गुणकर्म-विभागस्य सर्जनक्रियां प्रति करणत्वं स्वी क्रियते चेत्करणत्वस्य क्रियामात्रजनकत्वसमानाधिकरणव्यापारवद्वृत्तित्वनियमात्तत्र व्यापा-रापेक्षायां 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः' इत्युक्तदिशोत्प-त्तिरूपव्यापारस्य गले पतितत्वेन स्वमतप्रच्युतो भवति जातिपरिवर्तन-वादिनां गुणकर्मकृतजातिवादः।

तथा च न केवलगुणकर्मभ्यां जातिरात्मानमासादयेदितिकतूत्पत्तिव्या-पारे सत्येवेति भगवद्वाक्यादवसीयत इति जन्मनैव जातिर्निश्चयते न केवलगुणकर्मभ्याम्। गुणकर्मणी तु ब्राह्मणत्वादिजातिप्रयोज्ये सती जन्मकृतस्य जातिसामान्यस्य समुत्कर्षाधायके। जन्मसिद्धा जातिर्गुण-कर्मभ्यां समुज्ज्वलिता सती परिपूर्णतया चकास्तीत्यर्थः। यजनयाज-नाध्ययनाध्यापनदानप्रतिग्रहाः षट् कर्माणि, सत्यं दानमथाद्रोह आनृ-शंस्यं त्रपा घृणा, इत्यादयो गुणाश्च ब्राह्मणस्य। एवं क्षत्रियादेरपि गुणकर्मणी शास्त्रतो बोद्धव्ये। अयमेवार्थः स्पष्टमभिहितः सौप्तिकपर्वणि तृतीयाध्याये—

प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु विधाय च ।
वर्णे वर्णे समाधत्त ह्येकैकं गुणभाग्गुणम् ।
ब्राह्मणे वेदमग्र्यं तु क्षत्रिये तेज उत्तमम् ।
दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलताम् ॥
अदान्तो ब्राह्मणोऽसाधुर्निस्तेजाः क्षत्रियोऽधमः ।
अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान् ॥ इति ।

अनेन हि प्रथमतो वर्णान् सृष्ट्वा तदनन्तरं तेषु गुणकर्मणांविभागेनावस्थापनं कृतमिति व्यक्तमेवावगम्यते । अवगम्यते च गुणहीनानां ब्राह्मणादीनां निन्दितत्वं न तु तेषां ब्राह्मणेतरत्वमपि ।

किंच यदि गुणकर्मकृतमेव चातुर्वर्ण्यं न जन्मजातमिति मन्यसे तदा 'चातुर्वर्ण्यं समभवद् गुणकर्मविभागशः' इत्येव सामञ्जस्ये 'मया सृष्टम्' इत्येवं चातुर्वर्ण्यस्येश्वरकर्तृकत्वप्रतिपादनस्यास्य भङ्गापत्तिः । तथा चानितरसाधारणपुरुषकर्तृत्वे सत्येव चातुर्वर्ण्यस्य गुणकर्मजन्यत्वं संभवेन्नतु साधारणपुरुषकर्तृत्वे सति तस्य तत्कृतत्वमिति सूचितम् । चातुर्वर्ण्यसृष्टावीश्वरस्यैव सामर्थ्यं न तु केवलगुणकर्मणोरिति तत्तात्पर्यम् । अपि च—

शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥

इत्यत्र ब्राह्मणादिपदस्यासिद्धार्थतया तत्र नामकरणविध्युद्देश्यत्वासिद्धिप्रसङ्गः । जन्मजातब्राह्मणत्वादीनां गुणकर्मकृतजातिवादिना त्वयाऽनङ्गीकरणात् ।

नामधेयं दशम्यां तु द्वादश्यां वाऽपि कारयेत् ।

इति मन्वादिस्मृत्युक्ते नामकरणस्य मुख्यकाले ब्राह्मणत्वाद्यनुमापकगुणकर्मस्फुरणासंभवात्तर्ककर्कशधिषणेनापि तदानीं शिशौ जातेरनुमातुमशक्यत्वाच्च ।

किंच गुणकर्मभ्यां समुत्पद्यमानं ब्राह्मणत्वादिसामान्यं तत्किमसत्यन्तासदेवोत्पद्यत इत्यायुष्मतेष्यत आहोस्वित्सदेव ? नाऽऽद्यः । सिकताभ्यस्तैलोत्पत्त्यदर्शनात् । षण्ढादीनां पुंस्त्वाद्युत्पत्तिप्रसङ्गाच्च । प्रयत्नपरिमर्दितं...( प्रयत्नें वाळूचे कण रगडितां तेल हि गळे ) इत्यादि तु प्रयत्नप्रशंसार्थमिति स्पष्टमेव । नान्त्यः । गुणकर्मस्फुरणोत्तरकालं

तदुत्पत्तेस्त्वयाऽङ्गीकरणेन तत्पूर्वं तत्सत्त्वस्य सुतरां वक्तुमशक्यत्वात् । अथ तु 'त्रीणि मातृतस्त्रीणि पितृतः' इत्युक्तेः षाट्कौशिके स्थूलशरीरे मातापित्रवयवानामनुस्यूतेः श्रूयमाणत्वेन तदनुसारं ब्राह्मणत्वादिसामान्यं शिशुशरीरेऽनुवर्तत इति ब्रूषे चेदागतोऽस्युन्मार्गान्मदीयं पन्थानम् । यतस्तदेवाऽऽस्माकीनं जन्मजातं ब्राह्मणत्वादिसामान्यमिति किंकृतोऽयं जात्युत्पत्तिवाद इति मनः समाधाय त्वमेव निश्चिनु ।

एतत्सर्वमनुसंधायैव जातिविवेकप्रकरणारम्भे याज्ञवल्क्येनोक्तम्—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः । इति ।

अत्र 'विन्नास्वेष विधिः स्मृतः' इति सर्वशेषत्वेनोपसंहाराद्विन्नासु सवर्णास्विति संबध्यते । विन्नाशब्दस्य संनिहितशब्दत्वाद्वेत्तृभ्यः सवर्णेभ्य इति लभ्यते । तथा चायमर्थः संपन्नः—परिणयविधिनोढायां ब्राह्मणीप्रभृतिसवर्णायां वोढुः सवर्णाद्ब्राह्मणादेरुत्पन्नास्तत्सजातीया मातापितृसमानजातीया ब्राह्मणादय एव भवन्तीति ।

लौकिकन्यायानुगतं चेदम् । यो यज्जातीयाद्यज्जातीयायामुत्पन्नः स तज्जातीय एव भवति । यथा 'गोर्गवि गौरश्वादश्वायामश्वः' इति ब्राह्मणाद्ब्राह्मण्यामुत्पन्नो ब्राह्मण इति सिद्धम् । एवमेव क्षत्रियादयोऽपि ज्ञातव्याः ।

न चैवं न्यायेनैव सिद्धाविदं वचनं नापूर्वमिति वाच्यम् । यत्र प्रत्यक्षगम्या जातिर्भवति तत्र स न्यायः । यथोदाहृतं गोर्गवि गौरित्यादि । ब्राह्मणत्वादिजातिस्तु स्मृतिलक्षणा । यथा स्मरणं भवति । यथा समानेऽपि ब्राह्मण्ये कुण्डिनो वसिष्ठोऽत्रिर्गौतम इति स्मरणलक्षणं गोत्रं तथा मनुष्यत्वे समानेऽपि ब्राह्मणत्वादिजातिः स्मरणलक्षणा वाचनिकीति तदर्थमावश्यकमिदं वचनम् । मातापित्रोश्चैतदेव जातिलक्षणम् । न चैवं तन्मातापित्रोस्तन्मातापित्रोस्तन्मातापित्रोश्चैतदेव जातिलक्षणमित्येवमनवस्था प्रसज्येत । किंच सृष्ट्यारम्भकाले प्रथमोत्पन्नेऽव्याप्तमिदं लक्षणम् । तत्र ब्राह्मणत्वादिजातिविशिष्टमातापितृजन्यत्वाभावादिति वाच्यम् । बीजाङ्कुरन्यायेनानादित्वात्संसारस्येति याज्ञवल्क्यस्मृतिटीकायां मिताक्षरायां विज्ञानेश्वरैरेव समाहितत्वात् ।

तस्यायं भावः—बीजादङ्कुरोत्पत्तेरङ्कुराद्बीजोत्पत्तेश्च दर्शनाद्

बीजाङ्कुरयोर्द्वयोरुत्पत्तौ सत्यामप्युत्पत्तौ प्राथम्यं कस्येति नावधार्यते। अतोऽगत्या प्रवाहानादित्वमङ्गीकार्यम्। प्रवाहानादित्वं च नोत्पत्त्यभावः। किंतूत्पत्तिकालानवधारणम्। उत्पत्तिकालानवधारणं च द्विविधम्। क्वचित्कालसत्त्वेऽपि तज्ज्ञानाभावात्। क्वचित्तु कालाभावादेव तदज्ञानात्। तत्राऽऽद्यं बीजाङ्कुरविषये। द्वितीयं तु ब्रह्मशक्तिपरिणामभूतेऽव्यक्तादिविषये। अव्यक्तमहदहंकारोत्पत्त्यनन्तरमेव दिक्कालादिविशेषवस्तूत्पत्तेरित्यद्वैतामोदे स्पष्टम्। प्रकृतस्थले बीजाङ्कुरस्थानापन्नयोर्द्वयोर्ब्राह्मणयोर्मध्य उत्पत्तावन्यतरस्य प्राथम्यं नावधारयितुं शक्यत इत्यतः संसारस्यानाद्यत्या प्रवाहानादित्वं स्वीकार्यं भवति। स्वीकृते च संसारस्यानादित्वे ब्राह्मणत्वाक्रान्तमातापितृजन्ये देवदत्ते ब्राह्मणत्वलक्षणसमन्वयाद्ब्राह्मण्यसिद्धिः। देवदत्तीयमातापित्रोरपि ताद्दशमातापित्रन्तरजन्यत्वेन, मातापित्रन्तरयोरपि ताद्दशान्यमातापित्रन्तरजन्यत्वेनेत्येवं लक्षणसमन्वयात्सर्वेषां ब्राह्मणत्वसिद्धौ नानवस्था नाप्यव्याप्तिरिति बोध्यम्। एतत्संसारानादित्वमनुसंधायैवोक्तं निर्णयसिन्धौ—'सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रम्' इति गोत्रलक्षणमुक्त्वा 'यद्यपि वसिष्ठादीनां न गोत्रत्वं युक्तम्, तेषां सप्तर्षित्वेन तदपत्यत्वाभावात्। तथाऽपि तत्पूर्वभाविवासिष्ठाद्यपत्यत्वेन गोत्रत्वं युक्तम्। अत एव पूर्वेषां परेषां चैतद्गोत्रम्' इति। एवं चानाद्यविच्छिन्नपरम्पराप्राप्तवैदिकमन्त्रकरणकनिषेकादिश्मशानान्तक्रियावत्त्वसमानाधिकरणानाक्षिप्तब्राह्मणपदव्यवहार्यत्वविशिष्टमातापितृजन्यत्वं ब्राह्मणत्वमिति निष्कृष्टं ब्राह्मणलक्षणं पर्यवसन्नम्। एवं क्षत्रियादेरपि लक्षणं सुधीभिरूह्यम्।

नन्वेतल्लक्षणमयोनिजानामगस्त्यादीनां देवतादिप्रसादात्तपःप्रभावाद्वा ब्राह्मण्यं प्राप्तानां वीतिहव्यहारीतमौद्गल्यादीनां क्षत्रियतनयानां न संभवति। तेषु ब्राह्मणजातीयमातापितृसंबन्धाभावादिति चेन्मैवं वादीः। ब्राह्मणजातीयमातापितृसंभूतशरीरगतस्यैव ब्राह्मण्यस्य प्रतिपादकमिदं वचनम्। यत्र तु न ब्राह्मणजातीयमातापितृशरीरसंबन्धस्तत्रापि 'सर्वं ब्राह्ममिदं जगत्' इत्युक्तेस्तपःसामर्थ्येनाब्राह्मणादीनामपि ब्राह्मणत्वप्राप्तेः पुराणेषु वर्णितत्वेन च ब्रह्मसंकल्पदेवताप्रसादतपःप्रभावादिसमाहृतब्राह्मणशरीरोपादानसंबन्धस्य सत्त्वाज्जन्मजातब्राह्मणत्वमेव।

यथा सिद्धपुरुषशापाद्वा स्वकृतदोषाद्वा क्षत्रियवंश्यानामपि ब्राह्मणत्वं ब्राह्मणवंश्यानामपि च क्षत्रियत्वं भवति यतोऽपूर्वदेहसंबन्धस्यैव जन्मतयाऽत्रापि जन्मजातब्राह्मणत्वक्षत्रियत्वादिसिद्धान्तो न व्यभिचरति। तस्मादपूर्वदेहसंबन्धरूपजन्मैव जातिब्राह्मणत्वादिप्रयोजकम् । न तु गुणकर्मणी ।

> यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
> यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥

इति भागवतवचनं तु केवलजन्मजातब्राह्मणत्वाद्यपेक्षया सत्यं दानं क्षमेत्यादि स्वाभाविककर्मयुक्तानां तेषां प्रशंसार्थम् । न तु जन्मजातब्राह्मणत्वादीनां निरासार्थम् । तथा सति जात्या ब्राह्मणत्वादियुक्तानामनभ्युपगमाद्ब्राह्मणादिपदस्यासिद्धार्थतया ब्राह्मणादिपदार्थे ' शर्मवद् ब्राह्मणस्य स्यात् ' इत्यादिस्मृतिबोधितनामकरणविध्युद्देश्यत्वासिद्धिप्रसङ्ग इत्युक्तमेव । तस्माच्चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश इति गीतोक्तिश्चातुर्वर्ण्यसृष्टेरीश्वरकृतत्वं प्रतिपादयन्ती चातुर्वर्ण्यसृष्ट्यनन्तरं तेषु गुणकर्मणोर्विभागेन व्यवस्थापनमेव समर्थयते । न तु गुणकर्मविभागानुसारेण वर्णसृष्टिं व्यवस्थापयति । एतेन ब्राह्मणत्वादिजातेरेव परिवर्तने यस्य यज्जातिमुद्दिश्य विहितयोर्विधिनिषेधयोः स्वीकार इष्टः स्यात्तेन सा जातिः स्वीकार्या । तथा सति नापि शास्त्रं कदर्थितं नैव वा स्वेष्टं हापितं भवतीति प्रलपन्तः परास्ताः ।

यदि चात्र कश्चन शङ्काशङ्कुर्मनस्तोदकर उद्भवेत्तर्ह्यवश्यं धर्मतत्त्वनिर्णयतत्परिशिष्टे अवलोकनीये इति साग्रहा मेऽभ्यर्थना न विस्मृतिं नेतव्या प्रणयवद्भिः। तेन मनःस्वास्थ्यं परमवाप्स्यथेति दृढो मे विश्वासः। एवं च धर्मपरिवर्तनं जातिपरिवर्तनं वा नैव भवितुमर्हतीति यावद्बुद्धिबलं विविच्य प्रस्थापितं सिद्धान्तद्वयं श्रीसच्चिदानन्दचरणद्वये कुसुमरूपेण समर्प्य स्वलेखनीमधोऽवस्थापयति—

| | |
|---|---|
| पुण्यपत्तने चैत्रशुक्लपञ्चम्यामिन्दुवासरे शके १८५७ | मारूलकरोपाह्वः शंकरशास्त्री–भारद्वाजः। |

*

# अथ धर्मतत्त्वनिर्णयस्थविषयानुक्रमणिका ।

समाप्तेयं धर्मतत्त्वनिर्णयस्थविषयाणामनुक्रमणिका ।



# अथ धर्मतत्त्वनिर्णये प्रसङ्गादुद्धृतानां श्रुत्यादीनां सूचीपत्रम् ।



समाप्तमिदं धर्मतत्त्वनिर्णयस्थश्रुत्यादीनां सूचीपत्रम् ।



# अथ धर्मतत्त्वनिर्णयपरिशिष्टस्थानां विषयाणामनुक्रमणिका ।

समाप्तेयं धर्मतत्त्वनिर्णयपरिशिष्टस्थविषयानुक्रमणिका।

====

ॐ तत्सद्ब्रह्मणे नमः ।

# धर्मतत्त्वनिर्णयपरिशिष्टम् ।

सांप्रतं लोकव्यवहारे प्रचलिता ये विषया वादग्रस्ताश्च ये विषयास्तेषु केषांचिन्निर्णयो धर्मतत्त्वनिर्णये प्रदर्शितः । अवशिष्टा ये विषयास्तेऽत्र संगृह्यन्ते । प्राङ्निर्दिष्टेष्वपि च विषयेषु केचिद्दृढप्रतिपत्त्यर्थमत्रा पुनरनुसंधीयन्ते ।

ननु किमेते विषयाः प्राचीनैर्निबन्धकारैरनिर्णीता येनात्र तद्विषये प्रयत्यत इति चेत् । उच्यते—न खलु धर्मशास्त्रीयाः केऽपि विषयाः प्राचीनैर्निबन्धकारैरनिर्णीता भवन्ति । किंतु विषयाणां महत्त्वं महत्तरत्वं च यथायथमवलोक्य केषांचिन्निर्णयः स्पष्टमेव ग्रन्थेन प्रतिपादितः । केषांचित्तु सूचितः । सर्वथा न कोऽपि तादृशो विषयो यो निबन्धकारैर्निर्णयत्वेनास्पृष्टः । किंतु सांप्रतं जनानामज्ञानबाहुल्येन निर्णीता अपि केचिद्विषया अनिर्णीता इव प्रतिभासन्ते । अतस्तदर्थमयमारम्भः । अज्ञानमपि वरं न त्वज्ञानस्याज्ञानम् । कष्टं खलु यदिदानीं पण्डितंमन्यैः केश्चित्स्वकीयाज्ञानमप्यज्ञानत्वेनाजानानैः का दशा नीयेत धर्मस्तन्न जाने । विषमोऽयं कालः । अस्मिंश्च काले मनोवृत्तौ यत्कर्तव्यतया समुपस्थितं भवति तत्कर्तव्यमित्येवाऽत्र मे प्रवृत्तिः । परिणामस्त्वीश्वराधीनः । अतश्च श्रीभगवान्परमेश्वरस्तथा जनानां मनः प्रेरयतु यथा ते नाधर्मं धर्मं मन्वीरन् । एवं श्रीपरमेश्वरं संप्रार्थ्येदानीं धर्मतत्त्वनिर्णयपरिशिष्टं लिख्यते—

( अथ दत्तकस्य विवाहोपयोगिगोत्रनिर्णयः )

धर्मसिन्धौ ( १२५ पृष्ठे ) ' विवाहे तु सर्वदत्तकेन जनकपालकयोरुभयोरपि पित्रोर्गोत्रप्रवरसंबन्धिनी कन्या वर्जनीया । नात्र साप्तपुरुषं पाञ्चपुरुषमित्येवं पुरुषनियम उपलभ्यते ' इत्युक्तम् । तत्र सर्वपदोपादानात्के ते सर्वे दत्तका इत्याकाङ्क्षायां तन्निरासायाऽऽदौ तत्स्वरूपं निर्दिश्यते—

दत्तकास्त्रिविधः । नित्यद्व्यामुष्यायणोऽनित्यद्व्यामुष्यायणः केवलश्चेति । तत्र नित्यद्व्यामुष्यायणो नाम—आवयोरयं पुत्र इति संकल्प्य जातमात्र एव जनकेन प्रतिग्रहीत्रे दत्तः । अनित्यद्व्यामुष्यायणो नाम—यश्चूडान्तैः संस्कारैर्जनकेन संस्कृत्य पश्चाद्दत्तः । केवलस्तु जातमात्रं पुत्रं परिगृह्य प्रतिग्रहीत्रा जातकर्माद्यखिलैः संस्कारैश्चूडादिसंस्कारैर्वा संस्कृतः । अत्र त्रिवि-

येष्वपि दत्तकेषु दत्तकविधिशास्त्रबलादेव प्रतिग्रहीतृगोत्रसंबन्धो भवति । यथेदानीं लोके विवाहोत्तरमपि पुत्रोत्पत्त्युत्तरमपि वा दत्तको दृश्यतेऽसाव-नित्यद्व्यामुष्यायणेऽन्तर्भूत इति तस्यापि प्रतिग्रहीतृगोत्रसंबन्धो दानविधि-बलादेव सिद्धः । अनेनैवाऽऽशयेनोक्तं बृहन्मनुना—

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥ इति ।

पालकगोत्रं, दत्तकस्य गोत्रं भवतीति बोध्यमिति तदर्थः । प्रथमदत्तके जनकगोत्रसंबन्धस्तु—आवयोरयमिति संकल्पबलाद्दाने न ममेति त्यागाभावा-देकवस्तुनि संकल्पबलादुभयस्वत्वस्य लोकत एव सिद्धेश्च जनकपितृस्वत्वानि-वृत्तेर्वक्तुमशक्यत्वात्सिद्ध एव । तथा च गोत्रद्वयसंबन्धादस्य द्व्यामुष्यायण-त्वेन व्यवहारः सिध्यति । गोत्रद्वयभागित्वं हि द्व्यामुष्यायणत्वम् । युज्यते चैतत् । नडादित्वाद्गोत्रापत्यार्थे फक्प्रत्ययेन द्व्यामुष्यायणशब्दः सिद्धः । दत्तकश्चायं जनकपालकयोर्द्वयोः साक्षादपत्यं भवति न तु गोत्रापत्यम् । गोत्रापत्यं तु तद्गोत्रभूतयोर्द्वयोर्गोत्रापत्यम् । तथा च तत्रादःशब्देन विप्र-कृष्टस्यापि जनकपालकपितृगोत्रभूतयोर्ग्रहणम् । अदसस्तु विप्रकृष्टमित्यभि-युक्तोक्तत्वात् । एवं च गोत्रभूतयोर्द्वयोर्गोत्रापत्यमित्यर्थेन गोत्रद्वयसंबन्धा-भिधानमिति गोत्रद्वयसंबन्धभागित्वं द्व्यामुष्यायणत्वमिति पर्यवस्यति । एवंविधस्य च जातमात्रस्यैव परिग्रहः । अत एवास्य प्रतिग्रहीतृगोत्रेण जातकर्मादिकाः सर्वे संस्काराः प्रवर्तन्ते । एवं चास्य जन्मत आरभ्यैव गोत्रद्वयसंबन्धः सिद्धो भवति । एतदभिप्रायेणैवास्य नित्यद्व्यामुष्यायण-त्वेन शास्त्रे व्यवहारो दृश्यते । युक्तं चैतत् । तथा हि—नित्यशब्दः कालनै-रन्तर्यं ब्रूते । तच्चात्र प्रत्यासत्त्या द्व्यामुष्यायणोत्पत्त्यधिकरणीभूतक्षण-मारभ्य तत्तिरोभवनाधिकरणीभूतक्षणपर्यन्तम् । तथा चोत्पत्तिमारभ्य यावदवसानं गोत्रद्वयसंबन्धभागित्वं नित्यद्व्यामुष्यायणत्वमिति फलति । तत्तद्गोत्रेण संस्कारस्य तत्तद्गोत्रसंबन्धप्रयोजकत्वे तु तत्तद्गोत्रेण संस्कारोत्तरं तत्तद्गोत्रसंबन्धस्तत्तद्गोत्रसंबन्धोत्तरं च तत्तद्गोत्रेण संस्कार इत्यन्योन्याश्र-यापत्त्या गोत्रसंबन्धानुपपत्तिः ।

ईदृग्विध( सांकल्पिक )स्य च द्व्यामुष्यायणस्य पुत्रपौत्रादिसंततेरपि गोत्रद्वयभागित्वम् । तदुक्तं धर्मप्रवृत्तौ—आचार्यः—

द्व्यामुष्यायणकस्यैव नोद्वाहो गोत्रयोर्द्वयोः ।
तदपत्यस्य तज्जन्मगोत्रमेव विदुर्बुधाः ॥ इति ।

तत्—द्व्यामुष्यायणस्य गोत्रद्वयं, तत्संततेर्जन्मगोत्रमेव बुधा विदुरिति तदर्थात् । इदं च प्रथमद्व्यामुष्यायणविषयम् । 'तावदेव नोत्तरसंततौ' इति सत्याषाढेन द्वितीयद्व्यामुष्यायणसंततेर्गोत्रद्वयसंबन्धनिषेधप्रतिपादनात् । एवं च प्रथमद्व्यामुष्यायणस्य पुत्रपौत्रादिवंशपरम्परया गोत्रद्वयभागित्वं सिध्यतीति बोध्यम् ।

द्वितीयद्व्यामुष्यायणदत्तकस्थले तु—उक्तसंकल्पाभावेन न ममेति त्यागेन दानान्तर्गतस्य स्वस्वत्वस्य निवृत्तिदर्शनाज्जनकगोत्रसंबन्धो यद्यपि दुर्घटस्तथाऽपि कतिपयसंस्कारोत्तरमेव दानात्तदंशभूतेन न ममेति त्यागेन जातसंस्काराणां भुक्तवन्तामिति न्यायेन बाधायोगाज्जन्मतः सिद्धस्य तत्रापि संस्कारैरभिव्यक्तीकृतस्य जनकगोत्रसंबन्धस्य सर्वथा निवृत्तेर्युक्त्यसहत्वेन मन्दप्रवृत्तिकस्य तस्यास्त्येव तत्र सत्त्वमिति गोत्रद्वयसंबन्धभागित्वरूपं द्व्यामुष्यायणत्वमस्यापि सिद्धम् । न चैवं सत्यस्य पूर्वस्मात्को विशेष इति वाच्यम् । गोत्रद्वयसंबन्धस्य समानत्वेऽपि संस्कारोत्तरमेव दानात्तदुत्तरं प्रतिग्रहीतृगोत्रसंबन्धेऽपि तत्पूर्वं तत्संबन्धाभावेन जन्मत आरभ्य गोत्रद्वयसंबन्धाभावात् । अत एव चास्य न जातमात्रस्य परिग्रहः । एतदाशयेनैवायमनित्यद्व्यामुष्यायणत्वेन शास्त्रकृद्भिर्व्यवहृतः । अयमेव चास्य पूर्वस्माद्विशेषो बोध्यः । एवं दानमहिम्नैव प्रतिग्रहीतृगोत्रसंबन्धाद्विवाहोत्तरं पुत्रोत्पत्त्युत्तरमपि वा परिगृहीतस्यास्मिन्नन्तर्भावः सिध्यति । ईदृशे च दत्तके जनकगोत्रसंबन्धसत्त्वेऽपि तत्संबन्धस्य मन्दप्रवृत्तिकत्वं तत एव चोत्तरत्र तत्संततौ नोत्सहते प्रवर्तितुं स संबन्धः । एतदभिप्रायेणैवोक्तं सत्याषाढमुनिना—'तावदेव नोत्तरसंततौ' इति । तावदेव दत्तकपर्यन्तमेव जनकगोत्रमनुवर्तते नोत्तरत्र तत्संतताविति तदर्थात् । इदं चानित्यद्व्यामुष्यायणविषयमेव । तदुपक्रमेण तत्प्रवृत्तेः । तथा चैतत्संततेः प्रतिग्रहीत्रेकगोत्रत्वमेवेति पुत्रपौत्रादिवंशपरम्परयाऽस्य गोत्रद्वयसंबन्धाभाव इत्ययमपि पूर्वस्माद्विशेष ऊह्यः ।

तृतीयदत्तकविषये तु—उक्तसंकल्पाभावेन जनकगोत्रीयसंस्कारविशेषाभावेन च, न ममेति त्यागेन दानान्तर्गतस्य जनकपितृस्वत्वस्य सर्वथा निवर्तनात्प्रतिग्रहीत्रेकगोत्रत्वमेवैतस्य । तदुक्तम्—

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । इति ।

तथा चात्रैव यदि जनकगोत्रसंबन्धो नास्ति तदा दूरापास्त एव भवति तत्संततौ तत्संबन्ध इति केवलं प्रतिग्रहीतृगोत्रसंबन्धात्तदेकगोत्रत्वेन शास्त्रे व्यवहृतः । तथा च पुत्रपौत्रादिवंशपरम्परयाऽपि प्रतिग्रहीत्रेकगोत्रभागित्वं फलति ।

ननु यश्चूडाप्रागभाविजाताद्यन्नप्राशनान्तैः संस्कारैर्जनकेन संस्कृतस्य दत्तकस्यापि द्व्यामुष्यायणत्वं प्रसज्येत । जातसंस्काराणां बाधायोगेन जनकगोत्रसंबन्धस्य सर्वथाऽनिवर्तनेन तस्य गोत्रद्वयसंबन्धसत्त्वादिति वाच्यम् ।

पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥

इति वचनेन प्रतिपन्नचूडावस्थस्यैवान्यानिरूपितासाधारणपुत्रतानिराकरणाद्प्रतिपन्नचूडावस्थस्यान्यनिरूपितासाधारणपुत्रतासंप्रत्तिप्रतीतेरन्नप्राशनान्तसंस्काराणां बाधकल्पनाद्वारा तत्र जनकगोत्रासंबन्धसूचनात् ।

अत्रायमभिसंधिः—आचूडान्तमित्यन्तग्रहणाच्चूडान्तावयवककर्मसमुदायानुष्ठाने जनकगोत्रेण सत्येव द्व्यामुष्यायणत्वप्राप्तिः सूच्यते । एवं च द्व्यामुष्यायणत्वप्राप्तौ चूडासंस्कारस्य प्राधान्यं गम्यते । ततश्चूडाप्राग्भाव्यन्नप्राशनान्तसंस्काराणामप्राधान्यावगमाद्दुर्बलत्वम् । दुर्बलस्य च बाधार्हत्वाद्येन केनापि तद्बाधस्य लोकसिद्धत्वात्तादृशसंस्कारबाधः सुकर इति । यदि च चूडापर्यन्तसंस्काराणां मध्ये कतिपयसंस्कारानुष्ठानेऽपि द्व्यामुष्यायणताऽभीष्टा स्यात्तर्हि, आचूडमित्येवोक्तं स्यात् । अत एव केवलदत्तकलक्षणे जातकर्मादिभिश्चूडादिभिर्वेति विकल्पोक्तिः संगच्छते । अन्यथा जातमात्रस्य परिग्रहे तत्र जातकर्माद्यन्नप्राशनान्तसंस्कारानुष्ठानस्य नान्तरीयकतया चूडादिभिर्वेत्युक्तेरनुपपत्तिः । एवं च तत्र जातमात्रपदमप्रतिपन्नचूडावस्थपरमिति बोध्यम् ।

नन्वेवं जनकगोत्रकरणकचूडासंस्कारस्य द्व्यामुष्यायणतासंपादकहेतुत्वे प्रथमदत्तकस्य द्व्यामुष्यायणत्वं दुर्वचम् । जातमात्रस्य परिग्रहेण प्रतिग्रहीत्रैव जातकर्माद्यखिलसंस्कारानुष्ठानात् । यदि च तत्रापि चूडोत्तरमेव परिग्रह इत्युच्यते तर्हि तत्र नित्यशब्दार्थविरोध इति चेन्नायमदोषोऽस्ति । नेदं पितुर्गोत्रेणेत्यादिवचनमपूर्वत्वेन द्व्यामुष्यायणतायाः विधायकम् । तस्या दत्त-

[illegible]भाभिनिर्वर्त्यत्वात् । किंतु तन्नियामकम् । नियमस्य च [illegible]सगोत्रत्वासंस्काराणामपरदत्तविषयमिदम् । तथा च [illegible]परं दत्तस्य द्व्यामुष्यायणता संपाद्यते चेच्चूडासंस्कारानुष्ठानोत्तरं [illegible]वेति । एवं च चूडाप्राग्भाविसंस्काराणां स्पष्टमेव बाधोऽभिहित इति न काऽप्यनुपपत्तिः । इति त्रिविधदत्तकस्वरूपम् ।

ननु यः केवलदत्तकस्तस्य विवाहे कुतो जनकगोत्रपरिपालनम् । तस्य सर्वथा जनकगोत्रासंबन्धादिति चेन्न ।

> असपिण्डा च या मातुरसगोत्रा च या पितुः ।
> सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

[illegible] मनुवचने, असगोत्रा च याऽऽत्मन इति वक्तव्येऽसगोत्रा च या पितुरित्युक्त्या तन्निषेधात् । उक्तस्थले कन्याया वरनिरूपितसगोत्रत्वाभावेऽपि वरपितृनिरूपितसगोत्रत्वस्य विद्यमानत्वात् । एतदर्थमेव हि 'असगोत्रा च या पितुः' इत्युक्तम् । पितुरिति पदस्याभावे तु [illegible] वरनिरूपितसगोत्रत्वाभाववतीत्यर्थः स्यात्, इति जनकपितृगोत्रजायाः कन्याया दत्तकेन परिणयः स्यादित्यनिष्टमापद्येत ।

असगोत्रा च या पितुरित्यत्रत्यपितृपदेन पितामहादयोऽपि [illegible] । पितामहादिपदासमभिव्याहृतस्य पितृपदस्य साक्षात्परम्परासाधारण्येन जनकमात्रे पुंसि निरूढत्वात् ।

> पितरो यत्र पूज्यन्ते स्वकीयैः पितृभिः सह ।

यावन्तः पितृवर्गाः स्युरित्याद्यनेकस्मृतिवचनेषु तथा दर्शनाच्च । तथा च केवलदत्तकपुत्रेणापि स्वपितामहस्य (स्वसाक्षात्पितृजनकस्य) यद्गोत्रं तद्गोत्रजायाः कन्यायाः परिवर्जनं कार्यमेव । अनित्यद्व्यामुष्यायणस्य यः पुत्रस्तस्य तु साक्षात्पितृगोत्रवर्जनेनैव सिद्धिः । अनित्यद्व्यामुष्यायणे जनकपितृगोत्रसंबन्धसत्त्वात् । अनित्यद्व्यामुष्यायणपुत्रस्यानित्यद्व्यामुष्यायणवद्द्विगोत्रत्वं तु न । तावदेव नोत्तरसंततावििति सत्याषाढसूत्र उक्तत्वेनानित्यद्व्यामुष्यायणस्य यः पुत्रस्तस्मिन्ननित्यद्व्यामुष्यायणस्य यो जनकस्तद्गोत्रसंबन्धस्यासत्त्वात् । अत एवाभिवादनादावनित्यद्व्यामुष्यायणपुत्रस्य न गोत्रद्वयनिर्देशः । नित्यद्व्यामुष्यायणस्य त्वभिवादनादौ गोत्रद्वयनिर्देश आवश्यकः ।

अत्रेदं बोध्यम्-यथा कन्याया वरनिरूपितसगोत्रत्वाभावो वरपितृनिरूपितसगोत्रत्वाभावश्चाऽऽवश्यकस्तथा वरस्यापि कन्यानिरूपितसगोत्रत्वाभावः कन्यापितृनिरूपितसगोत्रत्वाभावश्चाऽऽवश्यक एवेति ।

यच्च पूर्वोक्ते धर्मप्रवृत्तिवचने पाठान्तरं क्वचित् दृश्यते—

द्व्यामुष्यायणकस्यैव नोद्वाहो गोत्रयोर्द्वयोः ।
तत्संततेस्तु तज्जन्मगोत्रमेव विदुर्बुधाः ॥ इति—

तत्रेदं वक्तव्यम्—तज्जन्मगोत्रमिति पदं समस्तं व्यस्तं वा । आद्ये तत्पदेन तत्संततेरित्यत्र तत्पदोक्तस्य द्व्यामुष्यायणस्य परामर्शोऽथवा संततेः। आद्ये द्व्यामुष्यायणस्य जन्मगोत्रं द्व्यामुष्यायणजनकस्य यद्गोत्रं तत् । तद्यदि द्व्यामुष्यायणसंततेः स्यात्तर्हि किं तवेष्टं साधितं स्यात् । प्रत्युतानिष्टमेव। संततेः परामर्शे तु तज्जन्म द्व्यामुष्यायणाद्द्विगोत्राज्जातमिति गोत्रद्वयप्राप्तिर्दुर्वारा । तत्पदवैयर्थ्यं च। कश्चेदानीं तत्संततेस्तु, इति तुशब्दबोध्यः पूर्वार्धोपात्ताद्विशेषः । तच्छब्देन द्व्यामुष्यायणपालकस्य परामर्शे तु तवेष्टं स्यात्। स तु सुतरां दुर्घट एव । तत्पालकस्य तत्राप्रकृतत्वात्। अथ तदिति व्यस्तं पदं, तच्च जन्मगोत्रमेवेत्येवशब्दबोधितविधेयत्वस्य जन्मगोत्रस्योद्देश्यसमर्पकम् । उद्देश्यविधेययोश्चात्र समानविभक्त्यन्तपदबोध्ययोः सामानाधिकरण्यमावश्यकम् । अतस्तच्छब्देन पूर्वार्धे गोत्रयोर्द्वयोरित्युक्तस्य गोत्रद्वयस्य परामर्शः । संततेर्गोत्रद्वयं जन्मगोत्रमेवेत्यर्थः स्यात् । तथाऽपि तवानिष्टमेव। तुशब्दास्वारस्यं च तदवस्थमेवेति । अतश्च सोऽपपाठ एव। समीचीनः पाठश्च प्राक्प्रदर्शित एव। लिखितपुस्तकेषु च बहुषु तथैव दृश्यते। एवं च तत्संततेस्तु, इत्यस्य स्थाने तदपत्यस्येति तुशब्दरहितः पाठस्तथा द्व्यामुष्यायणकस्यैव, इत्यस्य स्थाने द्व्यामुष्यायणकस्येव, इतीवशब्दघटितश्च पाठः साधीयान्। किंच धर्मप्रवृत्तावेतद्वचनात्पूर्वम् —

द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽपि नोद्वाह्याः शुङ्गशैशिरयोर्यथा ॥

इत्युक्त्वा तत आचार्य इत्युक्त्वा तदुत्तरमिदं वचनं निर्दिष्टम् । तथा चात्र द्व्यामुष्यायणस्य गोत्रद्वयेऽनुद्वाहोक्तिः पुनरुक्तिः स्यात् । पूर्वश्लोकोक्तस्य दृष्टान्तत्वेनोपन्यासस्तु युक्त एव। तज्जन्मगोत्रमित्यत्र तदिति च भिन्नं पदम् । तेन च गोत्रद्वयं परामृश्यते । तदपत्यस्येति मध्यमणिन्यायेनोभया-

न्वयि । तथा चायमर्थः संपन्नः—यथा द्व्यामुष्यायणकस्य गोत्रद्वयेऽपि नोद्वाहस्तथा तदपत्यस्य गोत्रद्वयेऽपि नोद्वाहः । यतस्तदपत्यस्य तत्—गोत्रद्वयं जन्मगोत्रमेवेति । यदि च

> द्व्यामुष्यायणकस्यैव नोद्वाहो गोत्रयोर्द्वयोः ।
> तत्संततेस्तु तज्जन्मगोत्रमेव विदुर्बुधाः ॥

इति पाठोऽपि कथंचिद्योजनीय इत्याग्रहस्तर्हीत्थं योजनीयः । द्व्यामुष्यायणो हि जन्मत एकगोत्रः । दत्तविधानबलाल्लब्धापरगोत्रः । एवमपि तस्यैव यदि गोत्रद्वये विवाहो न भवति किमुत जन्मत एव द्विगोत्रस्य तदपत्यस्येति । तत्संततेस्तु, इत्यत्र तुशब्दो न कार्यवैलक्षण्यद्योतकः, किंतु कारणवैलक्षण्यद्योतकः । तुशब्दघटितवाक्ये कारणस्यैव निर्देशात् । विवाहाभावः कार्यम् । गोत्रद्वयसत्त्वं कारणम् । तथा च द्व्यामुष्यायणतदपत्ययोः कार्यं सममेव । कारणं तु विलक्षणम् । द्व्यामुष्यायणे जन्मत एकं गोत्रं दत्तविधानादिना प्राप्तमपरम् । द्व्यामुष्यायणस्यापत्ये तु जन्मत एव गोत्रद्वयमिति विशेषः । एवशब्देन च तादृशं कारणगतं वैलक्षण्यमेव व्यवच्छिद्यत इति ।

अत्रायं निष्कर्षः—पूर्वोक्तत्रिविधदत्तकमध्ये, आद्यो दृढानुवृत्तपूर्वगोत्रः । द्वितीयो मन्दानुवृत्तपूर्वगोत्रः । तृतीयस्त्वननुवृत्तपूर्वगोत्रः । तत्र प्रथमदत्तकविषये दाने न ममेति त्यागो नास्ति । अतो जनकगोत्रानुवृत्तिः स्थिरैव । एवंविधस्य च तस्य संततिर्जन्मत एव द्विगोत्रा । अतस्तस्य तत्संततेश्च संस्कारा अपि गोत्रद्वयेनैव । द्वितीयदत्तकविषये तु जातसंस्कारबाधायोगात्पूर्वगोत्रानुवृत्तिर्यद्यपि संभवति तथाऽपि न ममेति त्यागेन जनकस्वत्वस्य निवृत्तत्वाच्छिथिला भवति । शैथिल्यादेव च तदुत्तरसंततावभिसंबन्धुं न क्षमते । अत एव सत्याषाढेनोक्तम्—तावदेव नोत्तरसंतताविति । संततेश्च संस्काराः प्रतिग्रहीतृगोत्रेणैव भवन्ति । तृतीयश्च जातमात्र एव दत्तः । अयं च प्रतिग्रहीतृगोत्रेणैव संस्कृतः । एतदभिप्रायेणोक्तम्—गोत्ररिक्थे, इत्यादि । अत्र च दत्तकस्यैव यदि पूर्वगोत्रसंबन्धो नास्ति तर्हि तत्संततौ पूर्वगोत्रसंबन्धो दूरापास्त एव भवति । एतदुक्तं भवति । त्रिविधदत्तकमध्ये प्रथमो यो नित्यद्व्यामुष्यायणो दत्तकस्तत्र जनकेन पित्रा स्वकीयस्वत्वनिवृत्तेरकरणात्तत्सामानाधिकरण्येनैव च दत्तविधानबलेन पालकस्वत्वोत्पादनात्तत्रैकस्मिन्नुशरीरे गोत्रद्वयसंबन्धः । स च तादृशदत्तकस्य पुत्रपौत्रादिसंततावनुस्यूत एव भवति न तु मध्ये पञ्चमपुरुषान्ते सप्तमपुरुषान्ते प्रतान्तेऽपि वा

विरमति । क्वापि विरामे प्रमाणाभावात् । यथा गोत्रप्रवरनिर्णये द्विगोत्रत्वेन ये प्रसिद्धास्तेषां संततिर्यथापि द्विगोत्रैव तद्वत् । अनित्यद्व्यामुष्यायणदत्तक-स्थले तु जनकेन पित्रा चूडान्तैः संस्कारैः संस्कृतोऽत एव च संप्राप्तजनक-गोत्रत्वात्तज्जनकगोत्रविशिष्ट एव च तेन दानकर्मीकृत इति दानविधिबला-त्संबध्यमानं प्रतिग्रहीतृगोत्रं जनकगोत्रविशिष्टे संबध्यत इत्यतोऽत्र विशिष्टे वैशिष्ट्यं न तु प्रथमदत्तकवदेकत्र द्वयम् । तत्र च पालकगोत्राश्रयस्वरूपान्तः-प्रविष्टं जनकगोत्रमिति तदप्रधानम् । विशिष्टे विद्यमानं च पालक-गोत्रं प्रधानमित्यतोऽग्रे तत्संततौ पालकगोत्रमेकमेवानुवर्तते । जनक-गोत्रसंबन्धस्तु दत्तकपर्यन्तमेव । एतदेवोक्तं सूत्रकारेण—तावदेव गोत्रसंत-तिरिति । केवलदत्तकस्त्वकृतचूडासंस्कारोऽत एवासंबद्धजनकगोत्र इत्येक-मेव पालकगोत्रं तस्य । अतस्तत्संततेर्गोत्रद्वयशङ्काऽपि नोदेतीति । अत्रात्र्येन दत्तकेन तत्पुत्रपौत्रादिना च, द्वितीयदत्तकेन चाभिवादनश्राद्धादौ गोत्रद्वय-निर्देशः कार्यः । द्वितीयदत्तकस्य पुत्रपौत्रादिना, तृतीयदत्तकेन तत्पुत्र-पौत्रादिना चाभिवादनश्राद्धादौ गोत्रद्वयनिर्देशो न कार्यः । गोत्रद्वया-भावात् । त्रिविधैरप्येतैर्विवाहे गोत्रद्वयपरिपालनं कार्यमेव । असमानार्षगोत्र-जामिति निषेधात् । आद्यस्य द्वितीयस्य च दत्तकस्य गोत्रद्वयसंबन्धात् । आद्यस्य संततेस्तु जन्मत एव द्विगोत्रत्वात् । तदुक्तं धर्मप्रवृत्तौ—

> द्व्यामुष्यायणकस्यैव नोद्वाहो गोत्रयोर्द्वयोः ।
> तदपत्यस्य तज्जन्मगोत्रमेव विदुर्बुधाः ॥ इति ।

द्वितीयदत्तकस्य पुत्रपौत्रादिना, तृतीयदत्तकेन तत्पुत्रपौत्रादिना चाभिवादनश्राद्धादौ प्रतिग्रहीतृगोत्रेणैव निर्देशः कार्यः । विवाहे तु गोत्रद्वयपरिपालनं कार्यमेव । यद्यपि वरस्य प्रतिग्रहीतृमात्रगोत्रत्वाज्जनक-गोत्रजा कन्याऽसमानार्षगोत्रजा भवति तथाऽपि ' असगोत्रा च या पितुः ' इति मनुवचनेन तत्र निषेधस्य दुर्वारत्वात् ।

ननु द्वितीयदत्तकपुत्रस्य तृतीयदत्तकस्य च जनकगोत्रजा कन्या पितुः सगोत्रा भवेत् । द्वितीयदत्तकपौत्रादेस्तृतीयदत्तकपुत्रपौत्रादेश्च दत्तकजनकगो-त्रजा कन्या कथं पितुः सगोत्रा भवेत्, इति चेत्—अत्र वदन्ति । असगोत्रा च या पितुः, इत्यत्रत्यपितृपदेन पितामहादेरपि ग्रहणात् । एतत्सर्वमनुसंधा-योक्तम् विवाहे तु सर्वदत्तकेनेति । नात्र साप्तपुरुषमित्यादि च । नात्रेति । अत्र जनकपितृगोत्रवर्जने । तथा च परगोत्रीयदत्तककुलजेन सप्तमेनापि

दत्तकजनकगोत्रजायाः कन्यायाः परिवर्जनमेव कार्यम् । यदि तस्यासमत्कुलेऽमुकपूर्वजः परगोत्रीयदत्तक आसीदिति विज्ञानं स्यात् । तदुक्तं संस्काररत्नमालायाम्—द्विगोत्रस्य जनकपितृगोत्रवर्जनावधेः क्वचिदपीदानीमनुपलम्भाद्यावद्विज्ञानं वर्जनम् ( पृ० ४५३–पं० ५ ) इति । विवाहप्रकरणे धर्मसिन्धावप्युक्तम्—नात्र पुरुषसंख्या । तेन शतपुरुषोत्तरमपि द्विगोत्रत्वं नापैति ( पृ० १८० पं० २९ ) इति । अत्र द्विगोत्रत्वमित्यस्य प्रकरणानुरोधाद्विवाहप्रतिबन्धकीभूतं द्विगोत्रत्वमित्यर्थः । तत्र गोत्रद्वयमध्य एकं वरस्य स्वस्यैव । अपरं तु दत्तकस्य जनको यः पिता तस्य । तच्च पितृगोत्रत्वाद्विवाहप्रतिबन्धकमिति बोध्यम् ।

अत्रापर इत्थं संगिरन्ते । असगोत्रा च या पितुरित्यत्र पितृपदेन पूर्वेषां पितामहादीनां ग्रहणे प्रमाणं न पश्यामः । 'पितरो यत्र पूज्यन्ते' इत्यत्र तु बहुवचनबलादाद्यर्थावगतिरिति तत्र पितृपितामहादीनां ग्रहणं युक्तम् । एवं स्वकीयैः पितृभिः सहेत्यत्रापि बोध्यम् । यावन्तः पितृवर्गाः स्युरित्यत्र तु वर्गग्रहणात्पूर्वेषां ग्रहणम् । तथा च नित्यद्व्यामुष्यायणसंततौ शततमेनापि तदधिकेनापि वा पुरुषेण विवाहे गोत्रद्वयपरिपालनं कार्यमिति युक्तम् । अनित्यद्व्यामुष्यायणदत्तकस्थले तु तेन दत्तकेन साक्षात्तदपत्येन च विवाहे गोत्रद्वयपरिपालनं कार्यम् । तस्य दत्तकस्य स्वतो द्विगोत्रत्वात् । चूडान्तसंस्कारकरणेन जनकगोत्रसंबन्धस्य दानमहिम्ना पालकगोत्रसंबन्धस्य च सत्त्वात् । तत्पुत्रस्य तु पालकैकगोत्रमात्रसंबन्धेऽपि पितुरसगोत्रया सहैव विवाहसंस्कारस्य कर्तव्यत्वेन गोत्रद्वयपरिपालनस्याऽऽवश्यकत्वात् । तादृशानित्यद्व्यामुष्यायणस्य यः पौत्रस्तेन तदपत्यादिभिश्च गोत्रद्वयपरिपालने न किंचिद्बीजम् । केवलदत्तकस्थले च चूडान्तसंस्काराणामपि पालकगोत्रेणैव जातत्वाज्जनकगोत्रस्यासंबन्ध इति तस्यैकगोत्रत्वेऽपि तेन गोत्रद्वयपरिपालनं विवाहे कार्यमेव । जनकपितृगोत्रजायाः कन्यायाः पितुरसगोत्रत्वाभावात् । तादृशकेवलदत्तकस्य यः पुत्रस्तेन तदपत्यादिभिश्च गोत्रद्वयपरिपालने न किंचिद्बीजमिति ।

एतदभिप्रायेण निर्णयसिन्धुटीकायामार्डेकृतायां दत्तकप्रसंगे ( पृष्ठे १८२–१८३ ) 'संपादितप्रतिग्रहीतृगोत्रसापिण्ड्यादिः सन्निवृत्तजनकगोत्रसापिण्ड्यादिः केवलदत्तकः' इति केवलदत्तकस्वरूपमुक्त्वा ततः 'न चास्य जनकगोत्रसापिण्ड्याद्यभावे जनकसगोत्रसपिण्डाविवाहप्रसङ्ग इति वाच्यम् । असगोत्रा च या पितुरिति निषेधात् । 'चकारेणासपिण्डा गृह्यते' इति

बोध्यम्। ततः 'न चैवं तत्पुत्रस्य दत्तकजनककन्यया विवाहः स्यादिति वाच्यम् । तस्याः पितृष्वसृत्वात् । तत्र च पितुः स्वसारमित्यादियाज्ञवल्क्य-वचनेन निषेधात् । तत्पौत्रस्य च जनकपौत्र्या विवाहो भवत्येव । बाधका-भावात्' इत्युक्तम् । यदि चासगोत्रा च या पितुरित्यत्र पितामहादीनामपि ग्रहणं स्यात्तर्हीतद्विरुध्यते । यतः केवलदत्तकस्य तत्संततेश्च जनकगोत्रसं-बन्धाभावेन दत्तकजनकस्य देवस्य या पौत्री कान्तिः सा यद्यपि केवलद-त्तकपौत्रस्य विष्णोरसगोत्रा भवति तथा तत्पितुरपि च मैत्रस्य तत्पितामह-स्यापि च चैत्रस्यासगोत्रा भवति तथाऽपि तत्प्रपितामहो यो देवस्तस्यासगोत्रा न भवति । कान्तेर्देवगोत्रजातत्वात् । अतोऽसगोत्रा च या पितुरित्यत्र पितृ-पदेन पितामहप्रपितामहादीनामपि ग्रहणे स निषेधस्तत्र दुर्वारः स्यात् । पितृपदेन साक्षाज्जनकस्यैव ग्रहणे तु केवलदत्तकपौत्रो यो विष्णुर्यश्च तस्य साक्षाज्जनकः पिता मैत्रस्तदुभयनिरूपितस्य सापिण्डत्वस्य सगोत्रत्वस्य च देवपौत्र्यां कान्तावभावेन विष्णुकान्त्योर्विवाहो निर्बाधो भवति । एवं चासगोत्रा च या पितुरित्यत्र पितृपदेन पितामहादीनां ग्रहणमयुक्तमिति ।

अत्रोदाहरणविन्यासो यथा—

देवदत्तः     पालकपिता     जनकपिता     देवः

चैत्रः     चैत्रः     हरः

मैत्रः     कान्तिः

विष्णुः

जामदग्न्यगोत्रोत्पन्नो देवनामा मूलपुरुषः । तस्य पुत्रौ द्वौ चैत्रहरना-मानौ । तत्र चैत्रः कौशिकगोत्रोत्पन्नाय देवदत्ताय कस्मैचिद्दत्तः । अयं च चूडादिसंस्कारात्प्राग्बाल्यावस्थायामेव दत्त इत्यतः केवलदत्तकोऽयम् । विधानबलाच्च नास्य जामदग्न्यगोत्रसंबन्धः । तस्य च चैत्रस्य पुत्रो मैत्रः । मैत्रस्य पुत्रो विष्णुः । केवलदत्तकस्य चैत्रस्य तत्संततेश्च मैत्रादेरेकमेव गोत्रं कौशिकम् । मूलपुरुषस्य द्वितीयः पुत्रो यो हरनामा स जामदग्न्यगोत्र एव । तत्र गोत्रपरिवर्तने कारणाभावात् । तादृशहरस्य कन्या कान्तिः । सा च जामदग्न्यगोत्रोत्पन्नैव ।

प्रदर्शितमेतत्कल्पद्वयमसगोत्रा च या पितुरित्यत्र पितृपदेन पितृपितामह-प्रपितामहादीनां ग्रहणमित्येकः कल्पः । तत्रत्यपितृपदेन साक्षात्स्वजनकस्य पितुरेव ग्रहणमित्यपरः। इदानीमनयोः कल्पयोः क वैलक्षण्यं तत्प्रदर्श्यते । तत्र नित्यद्व्यामुष्यायणदत्तकः, तत्पुत्रपौत्रादयः, अनित्यद्व्यामुष्यायणदत्तकः, तत्पुत्रः केवलदत्तकश्चत्येतैरुक्तकल्पद्वयेऽपि विवाहे गोत्रद्वयपरिपालनं कार्य-मेव भवति । अनित्यद्व्यामुष्यायणदत्तकस्य ये पौत्रादयो ये च केवलदत्तकस्य पुत्रपौत्रादयस्तैः प्रथमे कल्पे विवाहे गोत्रद्वयपरिपालनं कार्यम् । द्वितीये कल्पे तु गोत्रद्वयपरिपालनं न तेषामावश्यकमिति । अस्मिंश्च विकल्पे यथाचारं व्यव-स्थेति केचित् । वयं तु प्रतीमः । वरेण स्वस्यासगोत्राऽपि काचित्कन्या स्वजन-कपितुः सगोत्रा चेन्नैव सा विवाह्येति निरुक्तकल्पद्वयेऽपि निर्विवादमेव । तत्र च किं बीजं स्यादिति समालोचनायां द्वयोर्वरवधूशरीरयोर्मूलपुरुषैकशरीरा-वयवान्वयस्तत्र बाधकः संदृश्यते । कस्यचिन्मूलपुरुषस्य यदेकं शरीरं तस्य येऽवयवास्तेषु केषांचिदवयवानां पुमपत्यद्वारा वरशरीरेऽन्वयस्तथा तत्रत्या-नामेव केषांचिदवयवानां पुमपत्यद्वारा वधूशरीरेऽन्वयश्चेत्तयोर्दांपत्यभावो नेष्यते । अत एव सगोत्रापरिणयो निषिद्धः । तत्र हि गोत्रप्रवर्तक ऋषिः कश्यपादिर्मूलपुरुष एकः । तस्यानेके पुत्रास्तेषां च प्रत्येकमनेके पुत्रास्तेषा-मपि पुनस्तथेति यथासंभवं कश्यपगोत्रसंबद्धानि सांप्रतमनेकानि कुलानि संदृश्यन्ते । तत्र कस्मिंश्चिदेकस्मिन्कुले समुत्पन्नो वरः । अपरस्मिंश्च कस्मिंश्चि-त्कुले समुत्पन्ना कन्या । वरश्चायं मूलपुरुषात्कश्यपाच्छततमः सहस्रतमो वेति न ज्ञायते । कन्याऽप्येवमेव । केवलं मूलपुरुषैकशरीरावयवान्वयस्य पुंसंतति-द्वारा वरशरीरे कन्याशरीरे च सत्त्वात्तयोर्मिथो विवाहो न भवति ।

दत्तकस्थले च दानविधिबलाज्जनकपितृगोत्रस्य निवृत्तावपि न जनकपि-तृशरीरावयवान्वयो निवर्तते । अतः स्वस्यासगोत्राऽपि जनकपितुः सगोत्रा कन्या निषिद्धा । एवं स्थिते यद्यसगोत्रा च या पितुरित्यत्र पितृ-पदेन पितामहादयो न गृह्यन्ते तर्हि सोदरयोर्देवदत्तयज्ञदत्तयोर्मध्ये कस्यचि-त्पुत्रः कस्यचित्कन्या । देवदत्तो यज्ञदत्तो वा तयोरन्यतरः परगोत्रे केवलद-त्तकश्चेत्तावता तदपत्ययोर्मिथो विवाहप्रसङ्गः । असपिण्डेत्यनेन तु न निर्वाहः । निवृत्तजनकगोत्रसापिण्ड्यादिः केवलदत्तक इति केवलदत्तकलक्षणस्य तैरेवो-क्तत्वात् । इष्टापत्तिरित्युक्तिस्तु न युक्तिसहा । एवं चासगोत्रा च या पितुरि-त्यत्र यद्बीजं तदेव तत्र पितृपदेन पितामहादीनामपि ग्रहणे प्रमाणमिति युक्तमुत्पश्यामः ।

नन्वेवं तर्ह्यसगोत्रा च या पितुरित्यत्र पितृपदं साक्षाज्जनकपितृपरमिति पक्षे निरवकाश एव स्यादिति चेत्—अस्तु नाम तस्यावकाश आपत्काले। यदि केनचिद्वरेण स्वस्य स्वजनकपितुश्चासगोत्रा केवलं स्वपितामहादेः सगोत्रा कन्या काचिदज्ञानेन विवाहिता, पश्चाच्चेयं पितामहस्य सगोत्रेत्येवं तस्य वरस्य ज्ञानमभूत्तर्हि तत्रोक्तं पक्षं प्रमाणीकृत्य तत्र सगोत्राविवाहप्रायश्चित्तं न कल्प्यमिति। एवं दत्तकसंततौ क्वचिन्निर्वाहेऽपि साक्षाद्दत्तकविषये नैव किंचिदपीदृशं प्रमाणम्। सर्वथा दत्तकेन गोत्रद्वयपरिपालनमवश्यं कार्यमेव न तत्र लेशतोऽपि विमतिरिति सिद्धम्। एवं स्थिते सांप्रतं क्वचित्स्माज्ञंमन्यानां यदाचरणं दृश्यते यद्विवाहकाले विवाहप्रतिबन्धकं गोत्रद्वयं परिस्फुरितं चेत्सद्य एव दत्तविधानेन जनकगोत्रत्यागं संकल्प्य विवाहं कारयन्तीति तत्सुतराममप्रमाणमेवेति सुधीभिराकलनीयम्।

यथा च दत्तकस्य विवाहकाले गोत्रद्वयपरिपालनं कर्तव्यं भवति तथा विवाहितस्य दत्तविधानकालेऽपि गोत्रपरिपालनं कर्तव्यं भवति। तद्यथा—ग्रहीता कश्चित्पुरुषः परगोत्रजं विवाहितं च कंचित्पुत्रत्वेन जिघृक्षति चेत्तर्हि तस्य ग्रहीतुरसमानगोत्रा कन्या येनोढा तमेव गृह्णीयान्नान्यम्। अत्रोदाहरणं यथा—कौशिकगोत्रोत्पन्नो देवदत्तो नाम कश्चित्पुरुषः काश्यपगोत्रोत्पन्नस्य यज्ञदत्तस्य पुत्रं चैत्रं विवाहितं दत्तकपुत्रत्वेन ग्रहीतुमिच्छति। परंतु यदि तेन चैत्रेण ग्रहीतुरसमानगोत्रा तथैवासमानप्रवरा च कन्या परिणीता स्याच्चेत्स ग्राह्यो भवेत्। यदि तु तेन चैत्रेण कौशिकगोत्रोत्पन्ना तेन समानप्रवरा वा कन्या परिणीता स्याच्चेन्न स देवदत्तेन ग्राह्यो भवति। अथ किमत्र निषेधे बीजमिति चेत्—उच्यते। सगोत्रापरिणयनिषेधे यद्बीजं तदेवात्र बीजमिति गृहाण। तथा हि—पुमपत्यद्वारैकमूलपुरुषशरीरान्वयवतोः स्त्रीपुंसयोर्मिथः संबन्धेन जायमाना संततिर्हि दुष्टा भवति। स च मूलपुरुषः शततमो वा सहस्रतमो वाऽप्यस्तु। एतदेव हि सगोत्रापरिणयनिषेधे बीजम्। प्रकृतेऽपि च कौशिकगोत्रजायां कन्यायां कौशिकगोत्रप्रवर्तकमूलपुरुषैकशरीरान्वयोऽस्त्येव। तत्पतिश्च चैत्रः कौशिकगोत्रोत्पन्नेन देवदत्तेन दत्तको गृहीतश्चेत्तत्र दत्तविधानकालिकमन्त्रबलात्कौशिकगोत्रप्रवर्तकमूलपुरुषैकशरीरान्वयो भावित एवेति तयोः संबन्धेन जायमाना संततिर्दुष्टा स्यात्। अत एव च जामाता श्वशुरस्य दत्तको न भवति। अन्यथा श्वशुरेण तद्भ्रात्रादिना वा यदि जामाता दत्तको जिघृक्षितश्चेत्तं निवर्तयितुं कः कथं प्रभवेत्। अथ भवतु जामाता दत्तकः, इष्टापत्तिरेवेति वैयात्येन ब्रूषे चेत्सा तवेष्टापत्तिः

पूर्वप्रदर्शितसगोत्रपरिणयनिषेधबीजसाम्यपराहतेति सुधियो विभावयन्तु ।

अथ यदि दत्तको वाऽन्यो वा सगोत्रापरिणयं कुर्यात्तर्हि सद्य एव तेन प्रायश्चित्तं विधेयम् । अन्यथा यावत्प्रायश्चित्तं नाऽऽचरति तावत्तस्याशुद्धिः कर्मानधिकारप्रयोजिका स्यात् । यद्यपि शरीरं बाह्यनिर्मलं स्यात्परिहितानि वस्त्राणि च धौतानि निर्मलानि स्युस्तथाऽप्यन्तरशुद्धिः शास्त्रमात्रगम्याऽव- तिष्ठतेव प्रायश्चित्तात्पूर्वम् । तदर्थं प्रायश्चित्तं विधेयमेव भवति ।

( शुद्धिस्वच्छताविचारः )—

अथ प्रसङ्गादत्र शुद्धिविचारः क्रियते । शुद्धिः स्वच्छता च भिन्नैव नतु तयोरैक्यम् । शुद्धिः शास्त्रीया स्वच्छता तु लौकिकी । एवमशुद्धिरस्वच्छता च भिन्नैव नतु तयोरैक्यम् । शुद्धिरशुद्धिश्च शास्त्रमात्रगम्या नतु कथमपि लौकिकैः प्रमाणैः शास्त्रसाहाय्यरहितैः साऽवगम्यते । स्वच्छता तथाऽ- स्वच्छता चेत्येतद्द्वयं तु केवलैर्लौकिकैः प्रमाणैरप्यवगम्यते । तत्राशुद्धिः शास्त्रीयाऽऽन्तरा बाह्या चेति द्विविधा । तत्राऽऽन्तरा दशाहत्र्यहादिपरिमिता नियतकालिकी तादृशकालावसाननिवर्त्या सूक्ष्मदेहनिष्ठा, बाह्या त्वशुद्धिः शास्त्रीया क्षणिकी स्नानादिनिवर्त्या स्थूलदेहनिष्ठा ।

अत्रेदं बोध्यम् । या चाशुद्धिरान्तरा सूक्ष्मदेहनिष्ठा तस्यां विद्यमानायां तादृशाशुद्धसूक्ष्मदेहसंयोगेन स्थूले देहेऽप्यशुद्धिर्बाह्या विद्यत एव । तस्याश्च बाह्याया अशुद्धेः स्नाननिवर्त्यत्वात्स्नाने कृते तेन निवृत्ताऽपि पुनरशुद्ध- सूक्ष्मदेहसंयोगस्य विद्यमानत्वात्सा स्नानाव्यवहितोत्तरक्षण एवोत्पद्यत इत्ये- वमनिवृत्तप्रायैव सा भवति यावत्सूक्ष्मदेहस्याशुद्धिः ।

एकादशाहे च यद्यपि प्रातः सूर्योदयकाल एवाऽऽन्तराऽशुद्धिर्नियतकाला- वसानक्षणे स्वयमेव निवर्तते तथाऽपि तन्निवृत्तेः प्राक् तादृशाशुद्धसूक्ष्मदेह- संयोगेन स्थूले देहे समुत्पन्ना बाह्याऽशुद्धिर्वर्तत एवेति तन्निवृत्तये स्नान- मपेक्ष्यते । यथा चतुर्थेऽहनि स्नानात्प्रागशुद्धया रजस्वलया स्पृष्टो देवदत्तो- ऽशुद्धोऽभूत्पश्चाच्च तस्यां स्नानेन शुद्धायामपि न तावता देवदत्तस्य शुद्धि- र्भवति, किंतु तस्य शुद्ध्यर्थं स्नानमपेक्ष्यत एव तद्वदेवात्र बोध्यम् । नियत- कालावसानोत्तरं च स्नानपर्यन्तमशुद्धिमात्रं रजस्वलादिस्पृष्टस्येव न तु तदानीमाशौचम् । अत एव तस्मिन्कालेऽन्यस्याऽऽशौचस्य प्राप्तावपि नाऽऽ- शौचसंपातः । तेन तादृशमन्यदाशौचं संपूर्णमेव धार्यं भवति । यद्यप्यशुद्धि- रेवाऽऽशौचं न तु ततो भिन्नं तथाऽपि न सर्वविधायामशुद्धावाशौचपदस्य रूढिः । किंत्वशुद्धिविशेषे प्राचीन एवेति ।

अथाऽऽधुनिकाः केचिदाहुः—शास्त्रीया लौकिकी च शुद्धिरेकैव, तथाऽशुद्धिरपि शास्त्रीया लौकिकी चैकैव, न तु तयोर्भेद इति । तदज्ञानविलसितम् । परस्परव्यभिचारेण तयोर्भेदस्याऽऽवश्यकत्वात् । क्वचिच्च तयोरेकत्र सामानाधिकरण्येऽपि न क्षतिः । नतु ततः कथमपि तयोरैक्यमिति भ्रमितव्यम् । दशाहसूतकादौ लौकिक्यां स्वच्छतायामपि शास्त्रीयशुद्ध्यभावात् । नेजकधौतवस्त्रादावपि तथैव । तथा स्नानेन शास्त्रीयायां शुद्धौ संपादितायां क्वचिद्व्रणे रक्तपूयादिस्रावशेषे लौकिकी स्वच्छता न दृश्यते । तथा स्नानेन रजस्वलायाः स्त्रियः शास्त्रीयायां शुद्धौ संपादितायामपि कस्याश्चित्स्रावाविषये लौकिकी स्वच्छता नास्तीति प्रसिद्धमेव । यद्यपि तदर्थां नैवेद्यवैश्वदेवयोग्यपाकादौ नाधिकारस्तथाऽपि सामान्यतः पाकेऽधिकारोऽस्त्येवेति तत्र शास्त्रीया शुद्धिः सर्वथा नास्त्येवेति न भ्रमितव्यम् । तथा नेत्रादौ मलसंचये न लौकिकी स्वच्छता, शास्त्रीया तु शुद्धिः स्नानजन्याऽस्त्येवेति ।

अत्रेदमवधेयम्—शुद्धिरशुद्धिश्च प्रत्येकं नानाविधा—स्वल्पतरा, स्वल्पा, साधारणी, अधिका, अधिकतरा चेति । इह जगति क्वचिदर्थे शुद्ध्यशुद्ध्योः साधारण्यम् । क्वचित्तु शुद्धिरधिका चेत्तत्राशुद्धिः स्वल्पा । क्वचिच्च शुद्धिरधिकतरा चेत्तत्राशुद्धिः स्वल्पतरेति । न कोऽप्यर्थः केवलं सर्वथा शुद्धः सर्वथाऽशुद्धो वेह लोकेऽस्ति ।

लौकिकाशुद्धस्य चार्थस्य संबन्धं परिहरन्ति लोकाः । सामान्यतोऽशुद्धिश्चेत्तमर्थं न भक्षयन्ति । ततोऽधिकाऽशुद्धिश्चेत्तमर्थं न स्पृशन्ति । ततोऽप्यधिकाऽशुद्धिश्चेत्तमर्थं न जिघ्रन्ति । ततोऽप्यशुद्धिरधिका चेत्तमर्थं न पश्यन्ति । ततोऽप्यशुद्धिरधिका चेत्तमर्थं न शृण्वन्ति । एवं ज्ञानेन्द्रियपञ्चकद्वारा जायमाने पञ्चविधे संबन्धे पदार्थगताशुद्धितारतम्येन क्वचिदेकः संबन्धः परित्यज्यते क्वचिद्द्वयं क्वचित्त्रयं क्वचिच्चतुष्टयं, क्वचित्पञ्चकमिति स्वयमूह्यम् । अशुद्धस्य चार्थस्य संबन्धो यदिन्द्रियद्वारा जायमानो दुःखावहस्तदिन्द्रियद्वारा जायमानं तदर्थसंबन्धं परिहरन्त्येव लोका लौकिक्यामशुद्धौ । शास्त्रीयायामशुद्धावपि तादृशाशुद्धपदार्थसंबन्धस्य सूक्ष्मदोषावहत्वात्तत्संबन्धः परिह्रियते शास्त्रे ।

अयमाशयः—अशुद्धपदार्थसंयुक्ते पदार्थान्तरे तादृशाशुद्धपदार्थगतानां दोषाणां संक्रमणं भवति । महारोगग्रन्थिज्वरक्षयादिरोगेषु प्रसिद्धमेवैतत् । यथा चैतल्लौकिक्यामशुद्धौ तथा शास्त्रीयायामशुद्धावपि ज्ञेयम् । अशुद्धिसाम्याद् बाधकप्रमाणाभावाच्च ।

ननु यत्राशुद्धार्थसंयोगस्तत्र तादृशाशुद्धार्थगतदोषसंक्रम इति न व्याप्तिः । रोगिसंयुक्तेऽपि क्वचिन्मनुष्ये रोगोत्पत्त्यदर्शनादिति चेत्-भ्रान्तोऽसि । रोगोत्पत्तिर्हि दोषसंक्रमस्य कार्यम् । तस्या अदर्शनेऽपि तत्कारणीभूतस्य दोषसंक्रमस्याभावः कथं निश्चितः । दोषसंक्रमस्य सूक्ष्मत्वात् । तथा च तत्र दोषसंक्रमो जात एव स्यात् । तत्कार्यं रोगोत्पत्तिरूपं परं सहायाभावान्न जातं स्यात् । नैतावता पूर्वोक्ताया व्याप्तेर्व्यभिचारः । नह्यग्निव्याप्तं धूमं दृष्ट्वा तेनाग्नौ साध्ये सति तत्राग्नेः सूक्ष्मत्वे तत्कार्यस्य संनिहितविषयप्रकाशस्याभावेऽपि तत्र धूमेऽग्नेर्व्याप्तिर्व्यभिचरिता भवति । किंत्वव्यभिचरितैव । अग्नेः सत्त्वं तत्राप्यनुमीयत एव । अग्निसाध्यं संनिहितविषयप्रकाशनाख्यं कार्यं परं तत्र नास्तीति चेत्किं ततः । तथा प्रकृते दोषसंक्रमणमनुमीयत एव । दोषसंक्रमणस्य कार्यं रोगोत्पत्तिः परं तत्र नास्तीति चेन्मा भूत्नाम । सहायाभावान्न कार्यमुत्पन्नमिति बोध्यम् ।

अथ दोषसंक्रमणं कथं भवति तदुच्यते । ये दोषा वातपित्तकफादयो द्रव्यरूपास्ते सूक्ष्मेण परमाणुरूपेण संनिहिते देहादौ पदार्थान्तरे प्रविशन्ति । प्रविष्टाश्च ते स्वसंयोगेन मूलभूतान्परमाणून्स्वसदृशान्दोषरूपान् कुर्वन्ति । स्वयं च मूलभूतपरमाणुसंयोगेन त इव जीवात्मभोगसाधनी भवन्ति । ये च दोषा दुर्गन्धकटुरसादयो धर्मरूपास्ते स्वाश्रयैः परमाणुभिः सह संनिहिते पदार्थान्तरे प्रविशन्ति । प्रविष्टानां च तेषां मूलपरमाणुभिः सह संकरः पूर्ववदेव । यथाग्निसंयोगेन जलमुष्णं जायते तत्र कल्पद्वयम् । उष्णस्पर्शयुताः सूक्ष्मा अग्निपरमाणवो जले प्रविशन्ति । तत्र मूलभूता जलपरमाणवः स्वीयं शीतस्पर्शं त्यक्त्वा संनिहिताग्निपरमाणुगतोष्णस्पर्शसदृशमुष्णस्पर्शं गृह्णन्ति, इत्येकः कल्पः । स्वीयं शीतस्पर्शमविजहत एवोष्णस्पर्शं चागृह्णन्त एव चावतिष्ठन्ते । केवलं तत्र प्रविष्टाग्निपरमाणुगतोष्णस्पर्शस्यौत्कट्येन तदीयशीतस्पर्शो न भासत इति द्वितीयः कल्पः । अयं च द्वितीयः कल्प एव वैशेषिकसंमतः ।

दोषसंक्रमेऽप्येवं द्वैधं संभवति । किंतु ये 'दुष्टपदार्थान्तर्गतपरमाणूनां तत्संनिहितादुष्टपदार्थे प्रवेशः' इत्येवं संक्रमं न मन्यन्ते किंतु 'दुष्टाः परमाणवः पदार्थान्तरेऽप्रविश्यैव केवलं स्वसंयुक्तेष्वदुष्टपदार्थगतपरमाणुषु स्वीयदोषसदृशं दोषमुत्पादयन्ति' इति मन्यन्ते तन्मत उक्तकल्पद्वये प्रथम एव कल्पः संभवति न तु द्वितीयः । द्वितीयकल्पे जलपरमाणूष्णस्पर्शो-

त्पादनाभाव इव दुष्टसंयुक्तेऽपि पदार्थे दोषोत्पादनाभावात् । वस्तुतोऽसतः केवलं प्रतिभासमानस्य कार्यकारित्वाभावात् । नहि रज्जुसर्पो दशति । एवमदृष्टाः पापस्वरूपा ये दोषास्तेषामप्येवं संक्रमः संभवति । किंतु तत्र न पूर्वोक्तद्वैविध्यम् । अदृष्टस्य गुणरूपस्य स्वयं परमाणुस्वरूपाभावेनान्यत्र प्रवेशासंभवात् । नापि तदाश्रयीभूतानां परमाणूनामन्यत्र प्रवेशः । अदृष्टस्य जीवात्मनिष्ठत्वेन परमाणुनिष्ठत्वाभावात् । अतस्तत्र संक्रमः केवलं पापाश्रयीभूतात्मसंयुक्त आत्मान्तरे तादृशपापसदृशपापोत्पादनरूपः । उक्तसंक्रमभीत्यैव महापातकिनामस्पृश्यता शास्त्रकारैः कथिता । पुण्यवता सह संबन्धे पुण्यसंक्रमोऽप्येवमेवोपपादनीयः ।

अयं भावः–एकत्रावस्थितस्य धर्मस्यान्यत्र संबन्धः संक्रमपदार्थः । यथा कस्तूरीगन्धादेः । पुण्यपापयोस्तु न तथा संक्रमः संभवति । तयोरेकैकभागिमात्रनिष्ठत्वात् । किंत्वेकत्र प्राणिन्यवस्थितं यत्पुण्यं पापं वा तादृशपुण्यसदृशं पुण्यान्तरं पापसदृशं पापान्तरं च तादृशप्राणिसंबद्धे प्राण्यन्तरे समुत्पद्यते । अयं च गौणः संक्रमः । यत्र चानेकेषां सहाधिकारः, यथा कर्मविशेषे पत्युः सहैव भार्याया अप्यधिकारस्तत्र तादृशकर्मजन्यमपूर्व(पुण्य)मुत्पद्यमानं युगपदेवोत्पद्यते । न तत्र पत्युरदृष्टस्य भार्यायां गौणोऽपि संक्रमः । दंपत्योः सहाधिकारात् । अत एव भार्ययाऽन्वारब्धः( स्पृष्टः ) पतिस्तादृशं कर्म करोति । यदि तादृशं कर्म भार्ययाऽनन्वारब्धः सन्कुर्यात्तर्हि ततः कर्मवैगुण्यमिति न कृत्स्नमदृष्टं तत्रोत्पद्यते । किंतु किंचिन्न्यूनम् । तदपि च युगपदेवोत्पद्यत इति तत्रापि न संक्रमः । एवमधिकारिणाऽन्वारब्धेऽनन्वारब्धे च कर्तरि फले विशेषः प्रदर्शितः । अधुना प्रसङ्गादनधिकारिणाऽन्वारब्धेऽनन्वारब्धे च कर्तरि यो विशेषः स प्रदर्श्यते—तत्रानधिकारिणाऽनन्वारब्धे कर्तरि न कश्चिच्छङ्काया अप्यवसरः । अनधिकारिणि कर्मजन्यादृष्टोत्पत्तेः सुतरामसंभवात् । अनधिकारिणाऽन्वारब्धेऽपि कर्तरि कर्मजन्यमदृष्टमनधिकारिणि नैवोत्पद्यते । प्रत्युतान्वारम्भणेनानधिकारिकृतेन कर्तर्यदृष्टोत्पादने लेशतो हानिः स्यात् ।

अथान्वारम्भणशब्दस्य कोऽर्थः । यदि स्पर्शमात्रमर्थस्तर्हि पूर्वोक्तं युज्यते । यदि च स्वयं तत्कर्मण्यधिकारिणं मन्यमानेन कृतः स्पर्शोऽन्वारम्भणं तर्ह्यनधिकारिकृतमन्वारम्भणं नास्त्येव ।

वस्तुतस्तु—अंशतस्तत्कर्मजन्यफलभागिनं स्वयंमन्यमानेन कृतः कर्मकर्त्रा सह संबन्धोऽन्वारम्भणशब्दार्थः । अयं च संबन्धः कर्मकर्तुः साक्षात्स्पर्शः, कर्मकर्त्रा सहैकासनावस्थानं, तेन सहैकत्र निवासो वेत्यादिरनेकविधः । अयं चाधिकारिकृत इवानधिकारिकृतोऽपि संभवति । यद्यप्यधिकार्येव तत्कर्मफलभागी तथाऽपि तत्कर्मानधिकार्यपि तादृशकर्मकर्तृसहवासेनांशतस्तत्कर्मफलभागिनं स्वयं मन्यते । अनधिकारी च द्विविधः । तत्कर्मार्हस्तत्कर्मानर्हश्च । आद्यः सवर्णः । एकस्मिन्विप्रे क्षत्रिये वा स्वस्ववर्णानुसारेण किंचित्कर्म कुर्वति सति तत्र तदन्यो विप्रः क्षत्रियो वा तादृशं कर्म कर्तुमर्होऽपि तदानीं तत्र तत्कर्मण्यप्रवृत्तत्वात्स तत्रानधिकारीत्युच्यते । द्वितीयस्त्वसवर्णः । तस्य तादृशकर्मार्हत्वाऽपि नास्ति । तत्र यदृच्छया जायमानं, हठात्क्रियमाणं चेति द्विविधेऽन्वारभणेऽर्हाणां यदृच्छया जायमानमन्वारभणं न हानिकरम् । तत्कर्मार्हैर्हठात्क्रियमाणं त्वपूर्वहानिकरम् । अनर्हाणामन्वारभणं तु यदृच्छया जायमानमपि कर्मकर्तुरपूर्वहानिकरं भवति । अनर्हैर्हठात् क्रियमाणं तु कर्मकर्तुरपूर्वहानिकरं भवत्येवेति किं वक्तव्यम् । अतोऽनर्हाणां स्पर्शः प्रतिषिध्यते ।

अथान्यैः कृतं कर्मकर्तुरन्वारम्भणं कथमपूर्वहानिकरं भवति तदुच्यते । तदर्थं चाऽऽदौ सूतिकारजस्वलासूतकिचाण्डालादीनामस्पृश्यता या स्मृतिषु कथ्यते सा मीमांस्यते—

## ( अस्पृश्यताविचारः )

अस्पृश्यता च स्पृश्यताया अभावः । तत्र स्पर्शस्तज्जन्यो दोषश्चानेकविधः । स्पर्शः साक्षात्परम्परया चेति द्विविधः । अन्त्योऽपि वस्त्रादिपदार्थद्वारा छायाद्वारैकाधिकरणद्वारैकगृहावस्थानद्वारा संभाषणश्रवणद्वारा समालोचनद्वारा चेत्यनेकविधः । तदानीं परिगृहीतवस्त्रद्वारा जायमानस्पर्शस्तु साक्षादेव जात इति मन्तव्यम् । दोषोऽपि लघुतरो लघुर्महान्महत्तरश्चेति तारतम्येनानेकविधः । यथा यथा च दोषाधिक्यं तथा तथा दुष्टपदार्थस्य परम्परयाऽपि स्पर्शो निषिध्यते । यतो महत्तरदोषस्य संक्रमः परम्परया संबद्धेऽप्यर्थे संजायते । शास्त्रकारैर्हि—

> स्पर्शो विधीयते तत्र यत्र संक्रम इष्यते ।
> स्पर्शो निषिध्यते तत्र नेष्यते यत्र संक्रमः ॥
> गुणसंक्रम इष्टः स्यादनिष्टो दोषसंक्रमः ।

तत्र च यावता प्रमाणेन गुणसंक्रम इष्यते तदपेक्षयाऽधिकप्रमाणेन दोषसंक्रमो नेष्यते । यदि गुणोत्पत्तिर्यत्र न भवेत्तत्र सा कथंचित्सोढव्या भवेन्नतु कथमपि दोषोत्पत्तिः सोढव्या भवति । वरं हि गुणाभावो नतु दोषः । 'अपदोषतैव विगुणस्य गुणः' इति न्यायात् । नतु तथा गुण-राहित्यं निर्दोषस्य दोषो भवति । क्वचित्तु गुणबाहुल्ये स्वल्पो दोषो मृष्यत इत्यन्यत् । प्रायोदर्शनन्यायेन तु दोषः सर्वथा त्याज्य एव भवति । यथा सुक्षेत्रे स्वल्पोऽप्यूषरो भागस्त्याज्यो भवति । क्षारमृत्तिका हि निष्का-श्यान्यत्र प्रक्षिप्यते । अन्यथा सा स्वसंबन्धेनाखिलं तत्क्षेत्रं शनैः शनैर्दुष्टं जनयेत् । अत एव याज्ञे कर्मणि वेद्यामृत्विग्यजमानतत्पत्नीभ्योऽन्यस्य प्रवेशः प्रतिषिध्यते ।

ननु तत्रान्यस्य प्रवेशे का हानिः । कथं च सा भवति । उच्यते । अ-न्यश्च तादृशकर्मार्हः केवलं तदानीमवृतो विप्रः, तादृशकर्मानर्हश्च क्षत्रियादि-श्चातुर्वर्ण्यबहिर्भूतो निषादादिश्च । त्रिविधा अप्यते तत्र प्रविष्टाः कर्मजन्य-मपूर्वं न्यूनाधिकभावेन प्रतिबध्नन्ति ।

अथ प्रतिबन्धः कया विधया भवतीति चेत्-अत्र केचित्-कर्मानुसारेण तस्माज्जायमानं लघु महद्वाऽपूर्वं कर्मस्थले समुत्पन्नं सत्तत्रत्यान्सर्वान्पदार्था-न्संयुनक्ति । तत्र यथा सूर्यप्रकाशः सर्वान्पदार्थान्स्पृशन्नपि, आदर्शजलमण्यादौ सविशेषं चकास्ति, अन्यत्र तु स्पर्शमात्रं, तथा तदपूर्वं सर्वाञ्जडानर्थान्स्पृशदपि जीवात्मसु चकास्ति । तत्राप्यधिकारिषु कर्मकारिषु, अधिकारेण मलाप-सारणपूर्वकं प्रज्वलत्सु सविशेषं चकास्ति । इतरेषु जीवात्मसु तु जडेष्विव स्पर्शमात्रमेव । तत्राधिकारकृतमलापसारणस्याभावेन सुकृतग्रहणयोग्यताया अभावात् । तत्र स्पर्शस्य निरर्थकत्वेऽपि तावतांऽशेन हीनमधिकारिष्ववं-शिष्यत इति वदन्ति । तदपरे न क्षमन्ते । यथाऽपूर्वानुसारेण फलं ददाती-श्वरस्तथा कर्मानुसारेणापूर्वमुत्पादयितुं स एव प्रभवतीति सोऽधिकारिष्वेव जीवात्मस्वपूर्वमुत्पादयेन्नान्यत्रेति न तत्रांशेन हीनतोक्तविधया सुवचा । कथं तर्ह्यपूर्वोत्पत्तौ प्रतिबन्धोऽनधिकारिभ्यः सकाशाज्जायत इति चेदुच्यते । परमात्मा हि सूर्यापेक्षयाऽप्यधिकप्रकाश इति 'न तत्र सूर्यो भाति०' 'तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतिसिद्धमेव । तत्प्रकाशस्येयत्तैव नास्ति । तस्मात्परमात्मनः सकाशादपृथग्वर्तमाना अपि जीवात्मान उपाधिपरतन्त्रा उपाध्यावृतस्वरूपा इत्यतस्तेषां प्रकाशो मेघच्छन्नसूर्यस्येव न स्पष्टमुपलभ्यते ।

तत्रापि च दिवा मेघाच्छादनेऽपि न रात्राविव तमःप्रसर इति मेघच्छन्नस्यापि सूर्यस्य सूक्ष्मः प्रकाशो यथा विद्यते तथा जीवात्मनां सूक्ष्मः प्रकाशो विद्यत एवेति, एकत्रानेकजीवसमवाये मिथस्तेषामन्योन्यप्रकाशव्याप्तत्वात्परस्परोपरागेण मिथस्तेषां गुणदोषसंक्रमो दुर्निवार एव भवति। घटपटशरीरादयो जडाः पदार्थास्तत्र विद्यमाना अपि अयोग्या इत्यतो न तेषु गुणदोषसंक्रमः। यथा जपाकुसुमोपरागेण स्फटिके लौहित्यसंक्रमो न तु जपाकुसुमस्फटिकयोर्मध्ये वर्तमानेऽपि शिलापुत्रके तद्वत् । गुणेषु च मुख्यो गुणः पुण्यम् । इतरे गुणाश्च तन्मूलका एव । तथा दोषेषु मुख्यो दोषः पापम् । तन्मूलका एवेतरे दोषाः । एवं स्थिते याज्ञे कर्मणि यदि वेद्यामन्यः कश्चित्प्रविष्टः स्यात्तर्हि तद्गतं पापं कर्मकर्तरि जीवात्मनि संक्रमेत् । तेन च पापरूपेण मलेनाऽऽवृते जीवात्मनि तादृशकर्मजन्यसुकृतग्रहणयोग्यता समल आदर्शे बिम्बग्रहणयोग्यतेवांशेन हीना भवेत् । यथा यथा पापमधिकं संक्रमेत्तथा तथा सा योग्यताऽप्यधिकं विनश्येत् । विनष्टायां योग्यतायां सुकृतग्रहणं न संभवतीति कर्मवैफल्यम् । पापसंक्रमेण दुःखभोगश्चावर्जनीय एव । वेदिप्रविष्टस्य पापं च वेदिप्रवेशनिषेधोल्लङ्घनेन जायमानम् । न केवलं तस्यैव संक्रमः किंतु पूर्वसंचितपापस्यापि । तेन वेदिबहिर्भूतस्यापि संभाषणश्रवणादिनाऽवलोकनद्वारा वा संबन्धे तदीयपापस्य कर्मकर्तरि संक्रमो भवेदेवेति तदपि निषिध्यते । पापं च दृढतरमधिकं चेत्तस्य दूरतोऽपि संभाषणादिना संबन्धे संक्रमो भवति । क्वचिच्च संभाषणावलोकनाद्यभावेऽप्येकगृहावस्थानमात्रेणापि पापसंक्रमः संभवति । यथा चम्पकपुष्पस्य पक्वपनसस्य मृतमूषकादेश्च गन्धस्तद्गृहं व्याप्नोति तद्वत् । अत एव चाण्डालादिना सहैकत्रावस्थानं निषिध्यते । यथा च कर्मकाले कर्मकर्तरि पापसंक्रमस्तथा तदकरणकालेऽपि संक्रमो भवितुमर्हत्येव । तुल्यन्यायात् । न हि संक्रमे कर्मकर्तृत्वं निमित्तम्, किंतु पापवता सह संबन्धमात्रम् । अत एव सर्वदैव चाण्डालादिस्पर्शो निषिध्यते ।

चाण्डालं पतितं चैव दूरतः परिवर्जयेत्, इति ।

पुण्यस्यापि संक्रम एवं संभवतीत्यतः पुण्यवता सह संबन्धो विधीयते । कर्माकरणकाले जायमानोऽपि पापसंक्रमः पश्चात्कृतकर्मजन्यसुकृतग्रहणयोग्यतां दूरीकर्तुं प्रभवत्येव । आदर्शे हि पूर्वसंचितो मलो बिम्बग्रहणयोग्यतां तिरयत्येव । इयांस्तु विशेषः । यथा कर्मकाले कर्मकर्तुर्जायमानोऽस्पृश्यस्पर्शजन्यो दोषसंक्रमस्तदानीं क्रियमाणकर्मजन्यसुकृतग्रह-

-णयोग्यतां प्रतिबध्नाति न तथा कर्मणः पूर्वं तस्य जातोऽस्पृश्यस्पर्शजन्यो दोषसंक्रमः । यतः कर्मारम्भकाले पुण्डरीकाक्षस्मरणादिना बाह्याभ्यन्तर-शुद्धिं संपाद्यैव पुरुषः कर्मणि प्रवृत्तो भवति । सा चैवं संपादिता शुद्धिस्त-दानीं क्रियमाणस्य सुकृतोत्पादकस्य कर्मण उत्तेजिका भवतीत्यतः प्राक्-संक्रान्तं दोषं सुकृतोत्पादनयोग्यताप्रतिबन्धकं तावत्कालमपाकरोति । यदि तु पूर्वदुष्कृतकर्मजन्यदोषरूपः संक्रान्तो मलो बलवत्तरः कर्मारम्भकालिकी शुद्धिश्च स्वल्पेति न बलवत्तरमलापसारणसमर्था ततस्तया शुद्ध्या प्रतिबन्ध-निवारणं न भवति । यथाऽऽहुः—

प्रभातकाले हेमन्तेऽध्ययनप्रतिबन्धिका ।<br>
नाधीयानस्य शैत्यार्तिः स्फुलिङ्गेनापसार्यते ॥ इति ।

एवं च पापसंक्रमभिया पापवता सह स्पर्शो निषिध्यत इति सिद्धम् ।

एवं चेयमस्पृश्यता श्रुतिसंमतेत्यर्थादेव सिद्धं भवति । चातुर्वर्ण्यप्रतिपा-दकश्रुत्यभिप्रेतोऽयमर्थः । तथा हि—श्रुतिर्हि न सर्वानर्थान्साक्षाच्छब्देनाभि-धत्ते किंतु कांश्चिदर्थान्स्पष्टं प्रतिपादयति कांश्चित्प्रकारान्तरेण सूचयति । यथा 'इङ्गितेन चेष्टितेन निमिषितेन महता च सूत्रप्रबन्धेनाऽऽचार्याणाम-भिप्रायो गम्यते' इत्येवमाचार्यसूत्रकारविषये महाभाष्यकारैरुच्यते । स च न्यायः श्रुतिविषयेऽपि समानः । श्रुत्या हि प्रमाणमूर्धन्यया न कश्चिदर्थो लेशतोऽप्यनुपपन्नः प्रतिपादितः । किंतु जिज्ञासोर्बुद्धिमान्द्यादिदोषात्कचिदनु-पपन्न इव केवलमाभासते । सूक्ष्मतया मुहुर्विचारेण तज्ज्ञैर्विद्वद्भिः सह संवादेन वा साऽनुपपत्तिर्दूरतोऽपसारिता भवति । तदुक्तं सायणाचार्यैः सर्वदर्शनसंग्रहे—'नहि श्रुतिप्रतिपादितेऽर्थेऽनुपपन्ने वैदिकानां बुद्धिः खिद्यतेऽपि तु तदुपपादनमा-र्गमेव विचारयति' इति । तथा च वेदभाष्यकारैरुपोद्घाते क्वचिच्छ्रुत्यर्थानुप-पत्तिः प्रदर्शिता निवारिता च । अनुपपत्तिर्हि क्वचिच्छ्रुतिप्रतिपादितस्यार्थस्या-संभवित्वेन प्रतिभासते, यथा 'शृणोत ग्रावाणः' इत्यादौ । क्वचिच्च श्रुति-प्रतिपादितस्यार्थस्य निष्प्रयोजनत्वेन प्रतिभासते, यथा 'विश्वजिता यजेत' इत्यादौ । अर्थवादवाक्यविषयेऽप्येवमेव । चातुर्वर्ण्यं च श्रुतौ स्पष्टमेव प्रति-पादितं दृश्यते । वसन्ते ब्राह्मणोऽग्नीनादधीत (      ) इत्यादिना वर्णभे-देनाऽग्न्याधाने कालविशेषदर्शनात् । ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः (      ) इत्यादौ, तथा ब्रह्मणे ब्राह्मणमालभते (      ) इत्यादौ च चातुर्वर्ण्यस्य निर्देशः स्पष्ट एव । किंतु तत्र वर्णभेदे भेदकं

किमित्याकाङ्क्षायां न तत्र नरनारीवन्मनुष्यपशुपक्षिवद्वाऽऽकारभेदो वर्ण-भेदको दृश्यते । अतस्तत्रायं ब्राह्मणोऽयं क्षत्रिय इत्येवं वर्णभेदज्ञापकं किं स्यादिति चेत्—उच्यते । पितृपितामहादिक्रमागतायां तत्तद्योनौ जन्मैव तत्तद्वर्णग्राहकं लिङ्गं भवति । ननु चैवं वर्णभेदो यद्यपि ज्ञातुं शक्यस्तथाऽपि किमेतेनेति चेत्-मैवम् । सति प्रयोजने तस्य वर्णभेदस्यावश्यमङ्गीकर्तव्य-त्वात् । प्रयोजनं तु कर्मविशेषेऽधिकारविशेषो ब्राह्मणस्य षट्कर्मसु क्षत्रि-यस्य कर्मत्रय इत्यादिः । ननु मा भूदयं कर्मविशेषेऽधिकारविशेषः । अस्तु नाम सर्वेषु कर्मसु सर्वेषामधिकार इति चेत्—तथा सतीह जगत्यव्यवस्था महती स्यात् । यदि लोके राज्ञा सर्वेषु द्रव्येषु सर्वेषां स्वामित्वं समामित्ये-वमुद्घोषितं स्याच्चेच्चौर्यशब्दोऽनवकाश एव स्यात् । भवतु तथा, किं नश्छि-न्नमिति ब्रूषे चेत्तथा सति व्यवस्था कीदृशी स्यादिति त्वमेव मनसि विभावय ।

उत्कर्षापकर्षाभ्यां हि लोके व्यवस्था भवति । सर्वेषामुत्कर्षे सर्वेषां वाऽपकर्षे सा नैव भवतीति प्रसिद्धमेव । उत्कर्षापकर्षौ हि सदसत्कर्मजन्यौ । अनधिकारिकृतकर्मणश्चासत्त्वं प्रसिद्धमेव । ननु सर्वेषां सर्वत्राधिकारेऽनाधि-कारिकृतत्वमूलकस्य कर्मण्यसत्त्वस्याभावेऽपि कर्माङ्गभूतपदार्थक्रमविपर्य-यमूलकस्य पदार्थवैकल्यमूलकस्य वा कर्मण्यसत्त्वस्य सुवचत्वमेवेति चेत्—यथा भवानमुकस्यैवाधिकार इत्येवमधिकारं न मन्यते तथा भवादृशोऽन्यः कश्चन नियतं पदार्थक्रमं न मन्वीत । अपरश्च पदार्थवैकल्यमपि कर्मण्य-सत्त्वाधायकं न मन्वीत । स्वेच्छाचारे हि कः कस्य नियामक इत्येवं बहु-व्याकुली स्यादिति यत्किंचिदेतत् । इत्थं च नियततत्तत्कर्मविशेषाधिकारेण सप्रयोजनत्वं चातुर्वर्ण्यस्य प्रदर्शितं भवति । किंतु नैतावता ‘ चातुर्वर्ण्यं निष्प्रयोजनम् ’ इत्याक्षेपः परिहृतो भवति । यतो मा भूद्वर्णभेदो मा भूच्च कर्मविशेषाधिकारः किं तेन केवलेन यावत्सुखविशेषो दुःखविशेषनिवृत्तिर्वा पार्यन्तिकप्रयोजनत्वेन न प्रदर्श्यते तावद्व्यर्थ एव कर्मविशेषाधिकार इत्ये-वमाक्षेपस्तदवस्थित एव भवतीति चेत्—उच्यते—

सुखविशेषप्राप्तिर्दुःखविशेषनिवृत्तिश्च मुख्यं प्रयोजनमिति सत्यमेव । तद-र्थमेव हि सर्वेषां सर्वाः प्रवृत्तयो भवन्ति । किं त्वत्रापि कर्मविशेषेण कर्मा-नुसारेण पुण्यप्राप्तिद्वारा सुखविशेषप्राप्तिर्भवत्येव । अथैवमपि कर्मकर्तुः कर्मविशेषजन्यसुकृतग्रहणयोग्यता यावन्न संरक्षिता भवति तावद्वर्णभेदः

पुनर्निष्प्रयोजन एव भवति । यथा सुक्षेत्रे समुप्तं शालिबीजं गोमयकल्कादि-प्रक्षेपेण समीचीनाङ्कुरोत्पादनसमर्थं कृतम् । तत्र चोत्पन्ना अङ्कुरा यदि पशुभिर्भक्षिताः संमर्दिता वा स्युस्तर्हि ते शालयः कणिशग्रहणयोग्या न भवन्ति । अतस्तत्र तादृशयोग्यतासंरक्षणाय तत्र पशूनामप्रवेशाय कण्टक-शाखावरणं कृषीवलस्यावश्यकर्तव्यतां प्रतिपद्यते । इतरथा कृषीवलस्य बीजप्रक्षेपादिव्यापारो निष्प्रयोजन एव भवेत् । तथाऽत्र पापिनां संबन्धेन संक्रान्तपापरूपमलस्य कर्मकर्तुः कर्मजन्यसुकृतग्रहणयोग्यता विनश्येदिति चातुर्वर्ण्यं श्रुतिप्रतिपादितं पुनर्निष्प्रयोजनमेव स्यात् । तथा च चातुर्वर्ण्य-प्रतिपादकश्रुत्युपपत्तयेऽवश्यमेव पापिभिः सह संसर्गः परिहार्यो भवति । यावता च विना श्रुत्यर्थानुपपत्तिस्तावतोंऽशस्य कल्पना श्रुतिसंमता भव-त्येव । तथा च श्रुतिसूचिता श्रुतिसंमता चाण्डालादीनां पापिनामस्पृश्यता स्मृतिकारैर्लोकानां स्पष्टतयाऽवबोधाय—

'चाण्डालं पतितं चैव दूरतः परिवर्जयेत्'

इत्येवं प्रतिपादिता । नहि श्रुत्यसंमतस्यार्थस्य विधाने स्वातन्त्र्येण स्मृति-काराः प्रभवन्ति कदाचिदपि । नापि श्रुत्यसंमतस्य निषेधस्य प्रतिपादने । तेषां स्वतः प्रमाणत्वाभावात् । तथा चास्पृश्यता श्रुतिसंमतेति सिद्धं भवति। एतेनास्पृश्यतायाः शास्त्रे न किंचित्प्रमाणमस्ति, अतः सा हिन्दुधर्मेऽस्मिन् कलङ्कायते । कैश्चिच्छिष्टैः स्वकपोलकल्पितेत्यतः सा शिष्टाचारे रूढाऽभूदिति परास्तम् । अस्पृश्यतायाः श्रुतिस्मृत्यादिप्रमाणसिद्धत्वस्यानुपदमेवोपपादित-त्वात् । तथा चास्पृश्यता नैव कलङ्कः किंतु तस्यां कलङ्कत्वमारोपयन्त एवास्मिन्हिन्दुधर्मे कलङ्कायन्ते । किंच तेषां मतेऽस्पृश्यतासामान्यं कलङ्क उत तद्विशेषः । नाऽऽद्यः । 'तस्मान्मलवद्वाससा न संवदेत न सहासीत नास्या अन्नमद्यात्' ( तै० सं० २ । ५ । १ । ५ ) इति श्रुत्यैव रजस्वलया सह संवादनिषेधस्य तया सहैकासननिषेधस्य तदन्नग्रहणनिषेधस्य च स्पष्टमेव प्रतिपादनेन तत्रास्पृश्यतायाः श्रुतिसिद्धत्वात् । नहि धर्मप्रमाणेषु मूर्धन्य-भूता श्रुतिरेव धर्मे कलङ्कमुपस्थापयेत् । न द्वितीयः । अस्पृश्यतायाः स्वरूपे सर्वत्र समाने चाण्डालादिगताया एवास्पृश्यतायाः कलङ्कत्वे विशेषनियामकाभावात् । को ह्यस्यां विशेषो येनेयमेवेतराभ्यो निष्कृष्यते कलङ्कत्वारोपे । न तावदाकारविशेषः । अस्पृश्यतायाः सर्वत्रैव शास्त्र-मात्रगम्यत्वेन मूर्तस्वरूपाभावात् । तथा च नैवास्पृश्यतायाः स्वरूपतो भेदो

वक्तुं शक्यः । आश्रयभेदाद्भेदस्त्वौपाधिकः । औपाधिको भेद इत्यस्योपाधिर्भिन्न इत्यत्र पर्यवसानमिति न तस्यां भेदः । किंच विनिगमनाविरहेण सूतकिषु कुतो नास्पृश्यतायाः कलङ्कत्वमापाद्यते । अथ दोषमूलकत्वेनास्पृश्यतायाः कलङ्कत्वमिति चेत्सर्वत्रैवास्तु । रजस्वलायामपि हि दोषमूलिकैवास्पृश्यता । ये चोक्तश्रुतौ रजस्वलया सह संवादादयः प्रतिषिद्धास्तत्र कारणं ब्रह्महत्यादोष इति तत्र श्रुत्यैवोक्तम् । चाण्डालयोनौ जन्म च ब्रह्महत्यामूलकमेवेति कर्मविपाक उक्तम् । तथा च रजस्वलायामिव चाण्डालेऽप्यस्पृश्यताऽऽवश्यक्येव भवति । लोकेऽपि हि कस्मिंश्चित्प्रतिषिद्ध एकस्मिन्कर्मण्यनेकेषां प्रवृत्तिसाधारण्ये तत्र केचिद्दण्डेन युज्यन्ते केचिन्नेति विप्रतिषिद्धं दृश्यते शास्त्रेऽपि तद्वदेव बोध्यम् । एवमस्पृश्यता श्रुतिसंमतेति प्रदर्शितम् । अस्पृश्यस्पर्शश्च धर्मप्रतिबन्धक इति चोक्तम् । अस्पृश्यस्पर्शेन समल आत्मा सत्कर्मजन्यं सुकृतं धारयितुं न शक्नोति । अतो धर्मत्वं सुकृतस्य तज्जनककर्मणो वाऽस्तु । द्विधाऽप्यस्पृश्यस्पर्शस्य धर्मप्रतिबन्धकत्वं सिद्धम् । तत्र नैयायिकाः सुकृतस्य( पुण्यस्य ) धर्मत्वमिच्छन्ति गुणेषु च तस्य संग्रहं कुर्वन्ति । तन्मतेऽस्पृश्यस्पर्श उक्तविधयाऽऽत्मनि तदुत्पत्तौ प्रतिबन्धक इति स्पष्टमेव । ये तु चोदनालक्षणोऽर्थो धर्मः श्रेयःसाधनीभूतोऽर्थो धर्मः, अभ्युदयनिःश्रेयसहेतुर्धर्मः, इत्येवं सत्कर्मणो धर्मत्वं प्रतिपादयन्ति तेषां मते नित्यनैमित्तिककाम्यरूपत्रिविधसत्कर्ममध्ये काम्यस्य कर्मणः सुकृतोत्पादकत्वेन तत्रास्पृश्यस्पर्शः प्रतिबन्धकोऽस्तु । नित्यस्य नैमित्तिकस्य च कर्मणः पापक्षयमात्रकरत्वेन तत्रास्पृश्यस्पर्शस्य कया विधया प्रतिबन्धकत्वं भवति । उच्यते-संचितं तत्कालोत्पन्नं वा पातकं सुकृतग्रहणयोग्यतां विनाशयतीति प्रागुक्तमेव । अतो नित्यस्य नैमित्तिकस्य च कर्मणः पुण्योत्पत्तिप्रयोजकत्वं पापक्षयद्वारा तत्समर्थाचरणेन बोध्यम् । यथा हेमन्ते प्रातरध्ययने प्रवृत्तानां बटूनां समीपावस्थितोऽग्निः शैत्यनिवृत्तिद्वाराऽध्ययनयोग्यतामापादयन्नध्ययनसमर्थाचरणेनाध्ययनप्रयोजको भवति कारीषोऽग्निर्बटूनध्यापयतीति तद्वत् ।

ये त्वेवं मन्यन्ते संध्याग्निहोत्रादिकं नित्यं कर्म पापक्षयकरमपि न भवति किंतु तदकरणे प्रत्यवाय इति तदनुत्पत्तये तदवश्यकर्तव्यतामापद्यत इति तेषामपि मते तत्कर्म पापानुत्पत्तये क्रियत इति पापागमाभावस्थैर्यसंपादनेन सुकृतग्रहणयोग्यतासंरक्षणद्वारा पुण्योत्पत्तिप्रयोजकत्वं तस्य कर्मणोऽस्त्येव ।

अथ यः सामयिको धर्मः, यश्च राजकृतो धर्मस्तयोः किं काम्यकर्मण इव

सुकृतोत्पादकत्वमथवा नित्यनैमित्तिककर्मण इव पापक्षयकरत्वमिति । अत्राऽऽहुः—सामयिको राजकृतो वा धर्मो नोक्तत्रितयात्पृथग्भावमर्हति । किंतु तदन्तर्गत एव । यथा ग्रामस्थाग्रेसरपुरस्कृतैर्भूयोभिर्जनैर्मिलित्वा यद्ये-वमुद्घोष्यते यदस्मिन्ग्रामे सांप्रतं नास्तिकाः समागतास्ते यद्यपि किंचिदुप-देक्ष्यन्ति तथाऽपि न तथा केनापि वर्तितव्यम् । किंतु प्रत्यहं संध्याग्निहो-त्रादिकं कार्यमेवेति । ईदृशसमयानुसारेण क्रियमाणं नित्यकर्मैव । तथा तैरेव यद्येवं समयः क्रियते यत्सांप्रतमस्मिन्ग्रामे ग्रन्थिकज्वरः समुत्पन्नः । नून-मत्र देवताप्रकोपेन भाव्यम् । अतो देवताप्रीतये बलिप्रदानसहिता शान्तिः कार्येति । तदनुसारेण क्रियमाणं कर्म नैमित्तिकं भवेत्, तथा तैरेव मिलित्वा यद्येवं संकेत्यते यत्सांप्रतं ग्रामदेवताया देवालयं जीर्णमभूत्तदुद्धारार्थं यथा-शक्तिद्रव्यप्रदानेन सर्वैः साहाय्यं कार्यमिति । तदनुसारेणांशतो जीर्णो-द्धारजपुण्यप्राप्तये साहाय्यं कुर्वतां कर्म काम्यं भवेदिति । राजकृतसमयवि-षयेऽप्येवमेव बोध्यम् । यस्य च सामयिकस्य राजकृतस्य वा समयस्यो-क्तत्रितयान्तर्भावो न भवति तत्समयमात्रमेव न तु तस्य कथमपि धर्मत्वम् । यथा ग्रामस्थैर्जनैर्यद्येवं घोषणा क्रियते ग्रन्थिकज्वरस्य निवृत्तये सर्वैर्मूषकाः संहार्या इति, यथा वा राज्ञा यद्येवं घोषणा क्रियते त्रिंशद्वर्षात्प्राङ्मृतभर्तृका-णां स्त्रीणां पुनर्विवाहः कार्य इति, तथा प्रथमविवाहः कन्यायाः पञ्चदशवर्षा-नन्तरं कार्य इति । नहीदृशघोषणानुसारेण, मूषकान्विनाशयतः पुनर्विवाहा-दिकं कुर्वतः स्वल्पेनाप्यंशेन पुण्यमुत्पत्स्यति पापं वा पूर्वसंचितं स्वल्पेनाप्यं-शेन विनङ्क्ष्यति ।

यच्च सामयिकस्य राजकृतस्य वा धर्मत्वसिद्धये याज्ञवल्क्यवचनमुदा-ह्रियते—

> निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
> सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ इति ।

तदज्ञानविजृम्भितम् । न ह्यस्मिन्वचने सामयिकस्य राजकृतस्य वा धर्मत्वं प्रतिपाद्यते । किंतु श्रुतिस्मृत्यादिसिद्धमेव धर्ममनूद्य तस्य सामयिकत्वं राजपुरस्कृतत्वं वा भवेच्चेद्यत्नेन संरक्षणीयत्वं विधीयते । अत्र ‘ यस्तु सामयिकः ’ ‘ यश्च राजकृतो धर्मः ’ इत्येवं यच्छब्दयोगेनस्तादृशधर्मस्यो-द्देश्यत्वं प्रतीयते । ‘सोऽपि संरक्ष्यः ’ इत्येवं तच्छब्दयोगेन संरक्षणीयत्वस्य विधेयत्वं प्रतीयते । तदुक्तम्—

यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तच्छब्द एवकारश्च स्यादुपादेयलक्षणम् ॥ इति ।

उद्देश्यसमर्पकश्च धर्मशब्दः प्रसिद्धार्थक एव । न तु तस्मादेव वचनबला-त्तस्यापूर्वः कश्चनार्थो ग्रहीतुं शक्यते । एतेन राजकृतस्य धर्मत्वमस्माद्वचना-द्भवतीति प्रकल्प्य तेन धर्मस्य परिवर्तनीयत्वं साधयन्तः परास्ताः । यद्यप्य-यमर्थो बालैरपि सुज्ञेयस्तथाऽपि—

अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे ।

इतिन्यायेनाज्ञा जना मा भ्राम्येयुरित्येतदर्थमस्माभिः स्फुटीकृतः । तदयं निर्गलितोऽर्थः—समाजेन राज्ञा वा पुरस्कृतो य उक्तत्रितयान्यतमो धर्मः स यत्नेन संरक्ष्य इति । यद्यपि नित्यनैमित्तिकादिकर्मणो धर्मशब्द-वाच्यस्य पापक्षयपुण्यसंग्रहरूपादृष्टपुरस्कारेण संरक्ष्यत्वमन्यत्रोक्तमेव तथाऽप्यत्र दृष्टपुरस्कारेणापि तस्य संरक्ष्यत्वबोधनायात्रोक्तम् । यदि समा-जेन राज्ञा वा पुरस्कृतो धर्मो न संरक्ष्यते तर्ह्यदृष्टहानिः स्यादेव, किंतु तद-पेक्षयाऽतिरिक्ता दृष्टहानिरत्र समाजकृतदण्डरूपा राजकृतदण्डरूपा च स्यात् । अतोऽत्र यत्नेन संरक्ष्य इत्युक्तम् । इदं च वचनं याज्ञवल्क्येन व्यवहाराध्याये ग्रथितम् । व्यवहाराध्यायश्च दृष्टप्रधान इत्यतो यत्नाधि-क्यमत्रोक्तम् । तथा चोक्तेऽर्थे व्यवहाराध्यायसंगतिः सामीचीन्येनाऽऽल-क्ष्यते । राजकृत इत्यस्य राजपुरस्कृत इत्यर्थस्तु ‘ अप्यग्रणीर्मन्त्रकृतामृ-षीणाम् ’ इत्यत्रेव बोध्यः । तत्र हि मन्त्रकृतामित्यस्य मन्त्रपुरस्कर्तॄणामि-त्यर्थः । न हि ते महात्मानोऽपि मन्त्रमुत्पादयन्ति न वा तदुत्पादने प्रभ-वन्ति । तथा समाजो राजा वा न कंचिदपूर्वं धर्ममुत्पादयति न वा तदु-त्पादने प्रभवति । अतः समाजेन राज्ञा वा कृतो यः समयः स प्रसिद्धध-र्मानुबन्धी न चेत् समय इत्येव, न तु तस्य पुण्योत्पादकत्वं धर्मत्वं वा । एवं च सांप्रतं ‘ पञ्चदशवर्षात्प्राक्कन्याया विवाहो न कार्यः ’ इति राज-कीयं नियममुल्लङ्घ्य केनचित्ततः प्राक्कन्याया विवाहे कृतेऽपि न तादृश-नियमातिक्रमजं पातकं भवति । तादृशनियमस्य धर्मत्वाभावात् । राजदण्ड-भिया कामं जनानां तथा प्रवृत्तिर्न भवतीत्यन्यदेतत् । तथा चाण्डालेष्वस्पृ-श्यता न मन्तव्येत्येवं समाजेन राज्ञा वा समये कृतेऽपि चाण्डालस्पर्शदोषोऽ-स्त्येवेति सिद्धम् ।

अत्र कश्चिदाह–चाण्डालस्पर्शो दोषावह इति सत्यम् । किंतु विप्रायां शूद्राज्जातश्चाण्डाल इत्येवंलक्षणलक्षितानां स्पर्शो दोषावहो भवतु । अधुना तु ये चाण्डालजातीया इति प्रसिद्धास्ते तादृशलक्षणयुक्ता न भवन्ति । अतस्तेषां स्पर्शेऽपि दोषो नास्तीति । तदेतदज्ञानविजृम्भितम् । नहि विप्रायां जातश्चाण्डाल इत्येव तल्लक्षणम् । किंतु चाण्डालजातीयोत्पत्तौ मूलभूतबीज-कथनं तत् । तथा च तादृशो यः समुत्पन्नः स चाण्डालो भवत्येवेति तत्ता-त्पर्यम् । न तु तेन तदितरत्र चाण्डालत्वं व्यवच्छिद्यते । न हि जम्बूरसे पयो मिश्रितं चेत्तद्विषं भवतीत्युक्ते तद्विषस्य लक्षणं भवति । किंत्वेक उत्पत्तिप्रकारः स विषस्य । तथा च 'तदेव विषम्' इति न तस्य तात्पर्यम् । किंतु तद्विषं भवत्येवेति । तेनान्यस्य विषस्य नैव व्यावृत्तिर्भ-वति । अत एव पनसफले ताम्बूलमिश्रणे विषं भवतीत्युच्यते । एवमन्येऽपि प्रकारा यथासंभवमन्यत्र स्वयमूह्याः । तथा च यस्य चाण्डालजातीयः पिता तादृशी च माता स चाण्डालो भवत्येव । जातिर्हि जन्मतः प्राप्यत एव । यत्र तु पुनर्मातुः पितुश्च नैकजातीयत्वं तत्रानुलोमसंकरेण जातस्य मातृजा-तीयत्वं मातृपितृजातिद्वयमध्यजातीयत्वं वा । विलोमसंकरे तु जात्यन्तरत्वम् । जात्यन्तरं च तत्र मातृपितृजातिद्वयापेक्षया जघन्यमित्यन्यत् । सर्वथा चातु-र्वर्ण्ये वा संकरजातिषु वा मातुः पितुश्चैकजातीयत्वे संततेः सा जातिर्नि-र्बाधैव भवति । एवं च मातृपितृजात्यनुसारेण तत्संततेर्जातिरिति सिद्धम् ।

मातुः पितुश्च भिन्नजातीयत्वेऽपि तादृशजातिद्वयसंबन्धानुसारिण्येव संतते-र्जातिर्भवति । तथा हि–जातिद्वयसंबन्धो हि संततिशरीरान्तर्गतधातुद्वारा भव-ति । शरीरनिर्माणसमये हि गर्भावस्थायामान्तरं धातुत्रयं पितृतः प्राप्यते बाह्यं च धातुत्रयं मातृतः प्राप्यत इति श्रुतिसिद्धमेव । शरीरान्तरगतधातुषूत्तरोत्तर-मान्तरधातोर्बाह्यधात्वपेक्षया बलीयस्त्वमित्यतो बाह्यधातोरान्तरधात्वधीनत्व-म् । आन्तरधातोर्विकारश्चेत्तदुपरागेण बाह्यधातोर्विकार आवश्यक एव । एत-द्वैपरीत्येन बाह्यधातोर्विकारश्चेत्तदुपरागेणान्तरधातोर्विकारो भवतीति नैव नियमः । आन्तरधातुसत्ताया बाह्यधातुसत्ताधीनत्वात् । एवं स्थिते मातुः पितुश्च भिन्नजातीयत्वे यद्यनुलोमसंकरस्तर्हि पितृतः प्राप्तस्यान्तरधातु-त्रयस्य बाह्यधातुत्रयापेक्षया श्रेष्ठत्वम् । मातृतः प्राप्तस्य बाह्यधातुत्रय-स्य जघन्यत्वम् । अनुलोमसंकरे ह्यान्तरं श्रेष्ठम् । बाह्यं जघन्यम् । तत्र श्रेष्ठाधीने जघन्ये श्रेष्ठोपरागेण परिणामश्चेदंशतस्तत्र जघन्ये सामीचीन्यमेव भवेत् । माता शूद्रा चेत्ततः प्राप्तस्य बाह्यधातुत्रयस्य शूद्रत्वमेव । किंतु तत्राऽऽ-

न्तरोपरागेण सच्छूद्रत्वं स्यात् । एवं च संकरेऽपि संततेर्जातिर्मातृपितृतन्त्रेति सिद्धम् । विलोमसंकरे च पितृतः प्राप्तस्याऽऽन्तरधातुत्रयस्य बाह्यधातुत्रयापेक्षया जघन्यत्वम् । मातृतः प्राप्तस्य बाह्यधातुत्रयस्याऽऽन्तरधातुत्रयापेक्षया श्रेष्ठत्वम् । मातृजात्यपेक्षया पितृजातेर्जघन्यत्व एव हि विलोमसंकरो भवति । तत्र जघन्याधीने श्रेष्ठे जघन्योपरागेण गुणः कश्चिन्नैव भवेत् । प्रत्युत श्रेष्ठे वस्तुसतो गुणस्य हानिरेव स्यात् । न केवलमेतावदेव, किंतु श्रेष्ठे दोषोऽप्यधिकः संजायते । यथा कश्चिद्धनिकः स्वकीयायां संस्थायां स्वयं किमपि कार्यमकुर्वंस्तत्रान्यं नियोजयति । नियोजितं च तमयं स्वामी केवलमेवमेवं कुर्विति समाज्ञापयति । तत्र नियोजितो यदि मन्दबुद्धिस्तर्हि तत्र स्वामी तीक्ष्णबुद्धिरपि नियोजितस्य मन्दबुद्धेः सामर्थ्यं दृष्ट्वा तदनुसारेण प्रेरयति । तत्र च मन्दबुद्धिकृते कार्ये तीक्ष्णबुद्धिप्रेरणया लेशतो गुणाधानं संभवति । परं यदि स्वाम्येव मन्दबुद्धिस्तर्हि तेन नियोजितस्तीक्ष्णबुद्धिरपि सामीचीन्येन कार्यं कर्तुं समर्थोऽपि स्वामिपारतन्त्र्यात्स्वेच्छया स्वातन्त्र्येण कर्तुं न शक्नोति । स्वामी तु यथा प्रेरयति तथाऽयं नेच्छति । यथा चायमिच्छति तथा स्वामी न प्रेरयति । अनिच्छन्नपि चायमगत्या यथाकथंचित्प्रवर्तते । तदानीं कार्यं च यथाकथंचिदेव भवति । यथाकथंचिच्च जायमानं कार्यं सदोषमेव जायते । तदुक्तम्—

> मूर्खाधिष्ठस्योत्तमस्य समीचीना गतिः कुतः ।
> पिकोऽपि हेमन्त ऋतौ काकवद्दृश्यते जनैः ॥ इति ।

तथा च मातुः पितुश्च मिथो भिन्नजातीयत्वे तत्रानुलोमसंकरे विलोमसंकरे वा मातृपितृजातिद्वयमिश्रणानुसारिण्येव संततेर्जातिः । तयोरेकजातीयत्वे तु सुतरां सैव संततेर्जातिः । एवं च जातिर्जन्मसिद्धैवेति सिद्धमित्यधुना ये चाण्डाल इति प्रसिद्धास्तेषां प्रतिस्वं विप्रायां शूद्राज्जायमानत्वाभावेऽपि जन्मत एव चाण्डालत्वं सिद्धमिति तेषां स्पर्शे पूर्वोक्तश्रुत्यनुसारिस्मृतिवचनेन दोषोऽस्त्येवेति सिद्धम् । सति च दोषे तत्स्पृष्टस्याशुचित्वेन कर्मानधिकारः स्यादित्यतस्तत्स्पर्शो निषिध्यत इति युक्तमेव । एवमशुचिब्राह्मणस्य क्षत्रियविट्शूद्राणां च व्यवहारे लौकिके स्पर्शस्यानिषिद्धत्वेऽपि कर्मकाले कर्मकर्तुस्तादृशाशुचिब्राह्मणादिस्पर्शो निषिद्ध एव । तदेवं चाण्डालादीनां यावद्देहं सूतकिरजस्वलादीनां नियतकालिकमस्पृ-

श्यस्पृष्टानां स्नाननिवर्त्यं चेत्यनेकविधमशुचित्वं स्वसामानाधिकरण्येना-स्पृश्यतामुत्पादयति । तत्रास्पृश्यस्पृष्टगतमस्पृश्यस्पर्शजन्यं स्नाननिवर्त्यमशु-चित्वं च क्वचिदस्पृश्यतां नोत्पादयति । यथा जनसंमर्दे यात्रादिष्वस्पृश्य-स्पर्शं परिजिहीर्षोस्तदर्थं यावच्छक्यं प्रयतमानस्य च देवदत्तादेः कस्यचि-दस्पृश्यस्पर्शोऽभूत् । तत्र देवदत्तादिः स्पर्शं परिजिहीर्षुः स्पर्शश्च तेन न कृतः किंतु जातोऽतस्तादृशस्पर्शो दुर्बल इति तज्जन्यं देवदत्तादेर्यदशुचित्वं तत्स्वकार्यभूतां देवदत्तादेरस्पृश्यतां समुत्पादयितुं नालम् । मूलशैथिल्यात् । जनसंमर्दे चामतमपि किं न भवति । न श्रोतव्य इत्येवं निषिध्यमानोऽपि कश्चिच्छब्दः श्रुतिविषयतां हठात्प्रतिपद्यते । नेक्षेतेत्येवं निषिध्यमानोऽपि कश्चि-दर्थो दृष्टिपथमागच्छति । अनिष्टोऽप्यस्पृश्यस्पर्शः सहसा जायते । अनास्वा-दितोऽपि च रसः सूक्ष्मपरमाणुद्वाराऽकस्मादास्वादितो भवति । अनाघ्रेयोऽपि च गन्धः सहसा घ्रातो भवति। किंत्वेतत्सर्वमगत्या जायत इत्यजायमानमिव स्वं स्वं च कार्यमंशत समुत्पादयदपि न कार्त्स्न्येनोत्पादयति । अत एवोक्तं स्मृतिकारैः—

देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥ ( अत्रिः २४९ ) इति ।

स्पृष्टास्पृष्टिशब्दार्थश्च स्मृतिकारेणैव प्रदर्शितः—

प्राप्यकारीन्द्रियं स्पृष्टमस्पृष्टि त्वितरेन्द्रियम् ।
तयोश्च विषयं प्राहुः स्पृष्टास्पृष्ट्यभिधानतः ॥ इति ।

प्राप्यकारि संयुक्तविषयग्राहकं घ्राणत्वग्रसनात्मकमिन्द्रियत्रयं स्पृष्टपदे-नोच्यते । तदितरच्छ्रोत्रं चक्षुरिति द्वयं दूरस्थविषयग्राहकमस्पृष्टिशब्देनो-च्यते । तयोर्यो विषयो ज्ञानेन्द्रियपञ्चकग्राह्योऽर्थः स स्पृष्टास्पृष्टिशब्देनोच्यत इत्यर्थः । तथा च स्पृष्टास्पृष्टिर्न विद्यत इत्यत्र स्पृष्टास्पृष्टिशब्दप्रतिपाद्ये ज्ञाने-न्द्रियगृह्यमाणे विषये न विद्यत इति नञर्थो निषेधो बाधितः संस्तद्विशेषणी-भूते ज्ञानेन्द्रियकरणकग्रहणे पर्यवस्यति। जनसंमर्दे केनापीन्द्रियेण यः कोऽपि गृह्यमाणो विषयोऽगृह्यमाणवज्ज्ञेय इत्यर्थः । तत्तात्पर्यं च प्रागुक्तमेव । अग्रे च विस्तरेण प्रदर्शयिष्यामः ।

अत्र च स्पृष्टास्पृष्टि न विद्यत इत्यपि पाठो दृश्यते । स्पृष्टास्पृष्टिशब्दस्यार्थान्तरं च दृश्यते । तदगृहीत्वोच्यते—

' स्पृष्टास्पृष्टि न विद्यते ' इति पाठे समाहारद्वंद्वः क्लीबत्वमेकत्वं च स्पृष्टशब्दे च भावे क्त इति स्पष्टमेव । स्पृष्टं स्पर्शः, अस्पृष्टिरस्पर्शः । यात्रादिजनसंमर्दे चाण्डालादीनामस्पृश्यानां स्पर्शो देवदत्तस्य जातः । यज्ञदत्तस्य च न जातः । तयोः स्पर्शास्पर्शयोर्भेदो नास्ति । जनसंमर्दे जायमानोऽपि देवदत्तस्य चाण्डालस्पर्शो देवदत्तेऽशुचित्वमुत्पादयन्नप्यस्पृश्यतां नोत्पादयतीति यावत् ।

अयमाशयः—अशुचित्वं हि कश्चन दोषरूपोऽतिशयविशेषः । स चात्र चाण्डालादिषु जन्मान्तरीयकर्मजन्यो जीवदेहनिष्ठो यावदाश्रयभावी । अशुचित्वस्य च कार्यत्रयम्—तत्र १ कर्मानधिकारः २ अस्पृश्यतोत्पादनं चेति कार्यद्वयं साक्षात् । तृतीयं च परम्परया । तच्चास्पृश्यतोत्पादनद्वारा तादृशास्पृश्यसंस्पृष्टेषु ३ अशुचित्वोत्पादनम् । यात्रादिषु जनसंमर्देऽपि नैवैतदपोद्यते । अतस्तत्रापीतरत्रेव चाण्डालस्पृष्टेषु देवदत्तादिष्वशुचित्वमुत्पद्यत एव ।

अथ स्पृष्टास्पृष्टि न विद्यत इति प्रकृतवचनं तत्रापवाद इति चेत्–भ्रान्तोऽसि । तस्य वचनस्य चाण्डाले प्रवृत्त्यभावात् । स्पर्शास्पर्शौ हि तत्प्रवृत्तौ लिङ्गम् । न तच्चाण्डाले दृश्यते किंतु तत्स्पृष्टेषु तदस्पृष्टेषु च । वक्ष्यमाणषष्ठीतत्पुरुषपक्षेऽपि स्पृष्टत्वं लिङ्गं न चाण्डाले किंतु चाण्डालस्पृष्टेषु देवदत्तादिष्विति स्पष्टमेव । तथा च स्पर्शास्पर्शयोर्भेदो नास्तीत्यर्थबोधकस्य तस्य वचनस्य चाण्डालस्पृष्टेषु देवदत्तादिषु तदस्पृष्टेषु यज्ञदत्तादिषु च प्रवृत्तावपि चाण्डाले प्रवृत्तिर्नैव संभवति । किं तर्हि तेनापोदितमिति चेत्–उच्यते । यथा चाण्डालगतेनाशुचित्वेन कार्यत्रयमुत्पादितं तथा तत्रत्येन तृतीयकार्यभूतेन चाण्डालस्पृष्टदेवदत्तादिगतेनाशुचित्वेनापि कार्यत्रयमुत्पादयितव्यम् । तत्र च चाण्डालस्पर्शसत्त्वेनोक्तवचनप्रवृत्त्या निरुक्तकार्यत्रयमध्ये द्वितीयं कार्यं देवदत्तादिष्वस्पृश्यतोत्पादनमपोद्यते । तृतीयकार्यस्य च तत्संस्पृष्टे परत्राशुचित्वोत्पादनरूपस्य द्वितीयाधीनत्वाद्द्वितीयस्याभावे तृतीयस्याप्यर्थादेवाभावः । देवदत्तादिष्वनुत्पन्ना ह्यस्पृश्यता कथं देवदत्तस्पृष्टे चैत्रेऽशुचित्वमुत्पादयितुं प्रभवेत् । चाण्डालस्पर्शजन्यस्य देवदत्तादिगताशुचित्वस्य प्रथमं कार्यं कर्मानधिकाररूपं तु जायत एव । अतस्तदशुचित्वं देवदत्तादिभिः स्नानादिना निर्हरणीयमेव । एवं च साक्षाच्चाण्डालस्पर्शे यात्रादिष्वपि देवदत्तादीनामशुचित्वं विद्यत

एव। परम्परया स्पर्शे तु देवदत्तस्पृष्टचैत्रादीनां नाशुचित्वमिति फलितम्। एतेन 'यात्रादिषु जनसंमर्दे चाण्डालस्पृष्टानां देवदत्तादीनां यदि नास्पृश्यत्वं तर्हि तत्र चाण्डालानामप्यर्थादेव नास्पृश्यत्वम्। चाण्डालगतस्यास्पृश्यत्वस्याकिंचनकारित्वेन नष्टप्रायत्वात्' इत्यपास्तम्। चाण्डालगताशुचित्वेन तद्गतास्पृश्यत्वद्वारैव तत्स्पृष्टेषु देवदत्तादिष्वशुचित्वोत्पादनेन चाण्डालगतस्यास्पृश्यत्वस्याकिंचनकारित्वाभावात्। चाण्डालगतस्यास्पृश्यत्वस्य जन्मसहभुवो यावद्देहभाविनो देहविनाशं विना कारणान्तरेणाभावस्य दुर्वचत्वाच्च। वचनं तत्र प्रभवतीति चेन्न। वचनं हि स्वविषयेषु चाण्डालस्पृष्टेषु देवदत्तादिष्वस्पृश्यतां नोत्पादयेत्। न तु स्वाविषयेषु चाण्डालेषु जन्मसिद्धां तां निवर्तयेत्। जनसंमर्दे चाण्डालादिस्पर्शोऽवर्जनीय इत्यगत्या तत्रास्पृश्यता निवार्या भवति। तां च चाण्डालादिगतामनिवार्यं तत्स्पृष्टेषु तां निवर्तयन्स्मृतिकारोऽपि जन्मसिद्धाया अस्पृश्यताया अनिवार्यत्वमेवाभिप्रैति। अपरं चेदमत्रानुसंधेयम्—

> शौचं हि द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
> मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्॥

इति व्यासवचनेन शौचस्य द्विविधत्वेन तद्विरोधिभूतमशुचित्वमपि द्विविधम्। आभ्यन्तरं बाह्यं च। आभ्यन्तरं चित्तगतम्। बाह्यं देहादिगतम्। तच्च बाह्यं पुनर्द्विविधमाभ्यन्तराशुचित्वमूलकमशुचिस्पर्शादिकारणान्तरजन्यं च। तत्राऽऽद्यं यावदाभ्यन्तरभावित्वाद्गुरुभूतम्। अशुचिस्पर्शादिकारणान्तरजन्यं स्नानादिनिवर्त्यत्वेन क्षणिकत्वाल्लघुभूतम्। एवमशुचित्वस्य द्विविधत्वात्तन्मूलिकाऽस्पृश्यताऽपि गुरुलघुभेदेन द्विविधा। जनसंमर्दे चास्पृश्यताऽगत्या निवारणीयेति तादृशं निवारणम् 'अङ्गगुणविरोधे च तादर्थ्यात्' (जै० सू० १२।२।२५) इति न्यायेनाङ्गभूताया दीक्षणीयेष्टेरिव लघ्व्या एवास्पृश्यताया उपपन्नतरं न तु प्रधानभूतायाः सुत्याया इव गुर्व्या अस्पृश्यताया इति।

'स्पृष्टास्पृष्टिर्न विद्यते' इति पाठे तु कल्पद्वयम्। समाहारद्वंद्वेऽप्यार्षत्वान्न क्लीबत्वमित्येकः कल्पः। अर्थस्तु पूर्ववदेव। षष्ठीतत्पुरुष इति द्वितीयः कल्पः। स्पृष्टस्यास्पृष्टिरस्पृश्यता न विद्यत इत्यर्थः। चाण्डालादिना स्पृष्टस्य देवदत्तस्यास्पृश्यता न विद्यत इति पूर्ववदेवोदाहरणम्। किंत्वस्मिन्पक्षेऽस्पृ-

ष्टिशब्दे योग्यतार्थबोधकस्य कृत्यप्रत्ययस्याभावेऽपि तदर्थान्तर्भावेण वृत्तिः स्वीकार्येति क्लेशः । उद्देश्यबोधकस्य स्पृष्टशब्दस्य विधेयान्तर्गतास्पृष्टिशब्देन समासे विधेयाविमर्शदोषश्च । विशिष्टविधानाश्रयणं त्वगतिकगतिः । किंचैवमपि नैव प्रागतिकानामभीप्सितार्थसिद्धिर्लेशतोऽपि दृश्यते । तथा हि—

स्पृष्ट इत्यत्रामुकेन स्पृष्ट इत्येवं कर्ता न निर्दिष्टः । तथाऽमुकः स्पृष्ट इत्येवं कर्मापि न निर्दिष्टम् । अतस्तत्र चतस्रो विधाः संभाव्यन्ते—स्पृश्येन स्पृष्टः स्पृश्य इत्येवं स्पृश्यस्यैव कर्तृत्वं कर्मत्वं चेत्येका । अस्पृश्येन स्पृष्टोऽस्पृश्य इत्येवमस्पृश्यस्यैव कर्तृत्वं कर्मत्वं चेति द्वितीया । द्वयोश्चानयोर्विधयोरस्पृश्यता न विद्यत इति निषेधोऽनवकाश इति स्पष्टमेव । अस्पृश्येन स्पृष्टः स्पृश्य इत्येवमस्पृश्यस्य कर्तृत्वं स्पृश्यस्य कर्मत्वमिति तृतीया विधा । अस्यामेव च निषेधः सप्रयोजनः । अस्पृश्यकर्तृको यः स्पृश्यस्य देवदत्तादेः स्पर्शस्तेन समुद्भवन्ती या देवदत्तादावस्पृश्यता सा न विद्यत इत्यर्थसंगतेः । स्पृश्येन स्पृष्टोऽस्पृश्य इत्येवं स्पृश्यस्य कर्तृत्वमस्पृश्यस्य कर्मत्वमिति चतुर्थ्यां विधायां तु नैव निषेधस्यावसरः । स्पृश्यकर्तृकस्पर्शेनास्पृश्यतासमुद्भवस्यासंभवात् । ननु चण्डालादिष्वस्पृश्यता या जन्मसिद्धा सा जनसंमर्देऽपोद्यत इति चेदहो महत्पाण्डित्यं प्रदर्शितम् । स्पृष्टपदस्य सर्वथाऽनर्थक्यप्रसङ्गात् । 'अस्पृष्टिर्न विद्यते' इत्येतावतैव त्वदभीप्सितार्थसिद्धेः । किंतु स्पृष्टपदं प्रयुज्यास्पृश्यताहेतुभूतमस्पृश्यकर्तृकस्पर्शं सूचयतः स्मृतिकारस्याभिप्रेतमर्थं परित्यज्य चाण्डालादिष्वस्पृश्यतानिषेधकं वचनं प्रकल्पयन्भवादृशो निरङ्कुशः किं किं न कुर्यात् ।

धर्मशब्दः पुण्यरूपेऽर्थे प्रसिद्धो वैशेषिकनये धर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणा इत्यत्र । कर्मजन्योऽभ्युदयनिःश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्म इति हरदत्तेनोक्तम् ( आप० धर्म० १ । १ । ४ ) मीमांसकनये च पुण्यरूपेऽर्थे तादृशपुण्यजनकसदाचाररूपेऽर्थे च प्रसिद्धः । तत्र पुण्यजनकसदाचाररूपमर्थं गृहीत्वा सांप्रतं चर्चा प्रचलिता दृश्यते । अतस्तमेवार्थं गृहीत्वा ब्रूमः । धर्मस्य परिवर्तनं भवति न वेति विचारे क्रियमाण आदौ परिवर्तनस्वरूपं निर्णेयं भवति । तत्र परिवर्तनं परिवृत्तिर्द्वयोर्मिथो विनिमयः । आचारश्च त्रिविधः । पुण्यजनकः पापजनकः पुण्यापापाजनकश्चेति । तत्र पुण्यजनक आचारो धर्मशब्देनोच्यते । पापजनक आचारोऽधर्मशब्देनोच्यते । पुण्यपापाजनकश्चाऽऽचार उदासीन इत्युच्यते । तत्र य आचारविशेष एताव-

त्कालपर्यन्तं धर्मशब्दवाच्य आसीत्स आचारविशेष इतःप्रभृत्युदासीनश-ब्देनाधर्मशब्देन वा यद्युच्येत, तथा य आचारविशेष एतावत्कालपर्यन्त-मुदासीनशब्दवाच्योऽधर्मशब्दवाच्यो वाऽऽसीत्स आचारविशेष इतःप्रभृति धर्मशब्देन यद्युच्येत तदा धर्मपरिवर्तनं भवेत् । किंतु यस्य शब्दस्य यस्मि-न्नर्थे प्रवृत्तिरेतावत्कालपर्यन्तं न दृष्टा सेदानीं किं तस्य शब्दस्यार्थान्तरे शक्त्यन्तरं परिकल्प्य साध्यतेऽथवा तस्य शब्दस्य यत्पूर्वसिद्धं प्रवृत्तिनि-मित्तं तत्तत्रार्थान्तरे परिकल्प्य साध्यते । तत्राऽऽद्ये जलताडनपादविक्षेपादा-वुदासीन आचारे चौर्यादौ निन्दिते वाऽऽचार आधुनिकसंकेतेन धर्मशब्दः प्रयुज्यते चेदस्तु नाम न नः किंचिच्छिद्यते । आधुनिकसंकेतश्च पुरुषतन्त्र-स्तुण्डं च निरङ्कुशम् । धर्मेण पापमपनुदतीति श्रुतौ तदर्थग्रहणे प्रमाणाभाव एव । अथ पूर्वसिद्धं धर्मशब्दप्रवृत्तिनिमित्तं तत्र प्रकल्प्यते नत्वर्थान्तर आधुनिकसंकेतः क्रियत इति चेद्धर्मशब्दस्य यत्प्रवृत्तिनिमित्तं पुण्यजनकत्वं तदुदासीने निन्दिते वाऽऽचारे कथमवगतं त्वया । तत्तदाचारविशेषस्य पुण्यजनकत्वं हि तत्तद्वस्तुतन्त्रं वस्तुस्वभावासिद्धम् । न तदन्यथा कर्तुं युज्यत आधुनिकेन केनचित् । ननु विहितस्यापि कर्मणः कलिवर्ज्यप्रकरणे स्मृतिषु पुराणादिषु कथं निषेध उक्त इति चेत्किं ततः । नैव तद्धर्मपरिव-र्तनं तत्र कृतम् । नहि तैः पुण्यजनकं कर्म कलौ पापजनकमिति मत्वा निषिद्धम् । नापि च तैस्तादृशकर्मविधायकानि वचनान्यप्रमाणीकृतानि । किंतु पूर्वयुगे पुण्यजनकं तत्कलावपि पुण्यजनकमेव । यानि च वचनानि पूर्वयुगे प्रमाणानि तानि कलावपि प्रमाणान्येव । किमर्थं तर्हि कलौ निषेधः कृत इति चेत्—उच्यते । यस्मिन्पुण्यजनकेऽपि कर्मण्यजितेन्द्रियाणां निषि-द्धकर्मसंभावना भूयसांऽशेन दृश्यते तान्येव निषिद्धानि । यतस्तेभ्यः पुण्य-प्राप्तिस्तु दूर एव प्रत्युत कामपरवशतया निषिद्धाचरणे जायमाने तस्मात्पात-कोत्पत्तिः स्यादिति । तथा च पातकं सर्वथा गर्हणीयमिति तदनुत्पादमेव केनापि प्रकारेण तदर्थं केषांचित्कर्मणां वर्जनेऽपि न क्षतिः । नित्यानां तु कर्मणां न वर्जनम् । अकरणे प्रत्यवायश्रवणात् । यदि स्मृतिकाराणां धर्मपरिवर्तने सामर्थ्यं स्यात्तर्हि यस्मिन्नित्ये कर्मविशेषे कामपरवशानाम-जितेन्द्रियाणां निषिद्धकर्मसंभावना दृश्यते तस्य कर्मणः कलौ वर्जनं कृतं स्यात् । प्रत्यवायजनकं यन्नित्यकर्माचरणं तन्नैव प्रत्यवायजनकमि-त्येवं धर्मपरिवर्तने तस्य नित्यस्यापि कर्मविशेषस्य वर्जनसंभवात् ।

तथा यदि स्मृतिकाराणां धर्मपरिवर्तने सामर्थ्यं स्याच्चेत्तर्हि यथा तैः कलिवर्ज्यप्रकरणं कृतं तथा कलिग्राह्यप्रकरणं कृतं स्यात् । पूर्वं ये ग्राह्या विषया आसंस्तेषु केचित्कलियुगानुसारेण वर्ज्याः कृतास्तथा पूर्वं ये वर्ज्या विषया आसंस्तेषु केचित्कलियुगानुसारेण ग्राह्याः स्युः । यतश्च तादृश एकोऽपि विषयो ग्राह्यतया तैर्नोक्तस्ततस्तेषां धर्मपरिवर्तनासामर्थ्यमेव तदकरणं द्रढयति । अथ 'तदकरणं नासामर्थ्यकृतं किंतु तादृशो नैकोऽपि विषयस्तदानीं तेषां दृष्टिपथमारूढोऽभूत्' इति तु स्वान्तःपुर एव प्रणिगद्यमानं हृद्यं भवेत् । कालविपर्ययेण जनानां प्रवृत्तिर्हि विहिताकरण इव निषिद्धाचरणेऽपि भूयस्येव दृश्यते । तथा च यदि धर्मपरिवर्तने स्मृतिकाराणां सामर्थ्यं स्यात्तैश्च तत्तत्कालानुरूपपरिस्थित्यनुसारेण धर्मपरिवर्तनं कृतं स्यात्तर्हि कलियुगारम्भे निषिद्धाचरणे भूयसीं जनानां प्रवृत्तिमालक्ष्य कलिग्राह्यप्रकरणमवश्यमेव कृतं स्यात् । तस्मात्स्मृतिकाराणामपि नैव धर्मपरिवर्तने सामर्थ्यमिति सिद्धम् ।

कथं तर्हि पूर्वैर्ऋषिभिर्देवैश्च कैश्चिद्धर्मविरुद्धमाचरणं कृतम् । उतथ्यभरद्वाजयोर्मिथो भार्यागमनं वसिष्ठस्य चाण्डालीगमनं प्रजापतेश्च स्वदुहितृगमनमिति चेत्—नैवैतद्धर्मपरिवर्तनम् । नहि तैस्तादृशाचरणानुरूपो विधिः प्रतिपादितो दृश्यते । किंत्वयं धर्मव्यतिक्रमस्तेषाम् ।

ननु यदि नेदं धर्मपरिवर्तनं तर्हि धर्मप्रवर्तकानां तेषां कथं धर्मविरुद्धाचरणे प्रवृत्तिरिति चेत्—साहसमेवैतत्तेषाम् । साहसकर्मणि च प्रवृत्तिः केनचिद्विशिष्टेन हेतुना जायमाना दृश्यते । येन हेतुविशेषेण तदानीं स तस्य धर्मविरुद्धस्यापि कर्मणोऽवश्यकर्तव्यतां मन्यते । न तावन्मात्रेणैव तादृशानां तत्र प्रवृत्तिः । किंतु तादृशधर्मविरुद्धाचरणजन्यस्य संभविनो दुःखस्य परिहारे सामर्थ्यसत्त्व एव । आधुनिकानां तु तादृशभाविदुःखपरिहारसामर्थ्याभावेऽपि तादृशदुःखं सह्यमेवेति मत्वा प्रवृत्तिर्जायत इत्यन्यत् । तदेतदापस्तम्बीयधर्मसूत्र उक्तम्—'दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम् । तेषां तेजोविशेषेण प्रत्यवायो न विद्यते । तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः' (आप. धर्मसू. २ । ६ । १३ । ७, ८, ९ ) इति । तच्च तत्र वृत्तिकारेण हरदत्ताचार्येण स्पष्टीकृतम्—"यदि पूर्ववत्यादिषु मैथुने दोषः कथं तर्हि ऋतु( उतथ्य )भरद्वाजौ व्यत्यस्य भार्ये गच्छतुः । वसिष्ठश्चाण्डालीमक्षमालाम्, प्रजापतिश्च स्वां दुहितरम् । तत्राऽऽह—दृष्ट इत्यादि, सत्यं दृष्टोऽयमा-

चारः पूर्वेषाम् । स तु धर्मव्यतिक्रमः । न धर्मः । गृह्यमाणकारणत्वात् । तदन्वीक्ष्येत्यस्य तदिति नपुंसकमनपुंसकेनेत्येकशेष एकवद्भावश्च । तं व्यतिक्रमं तत्र तेषां साहसमन्वीक्ष्य दृष्ट्वा स्वयमपि तथा प्रयुञ्जानोऽवर इदानींतनः सीदति मस्त्ववेति " इति । अत्र च साहसपदं प्रयुञ्जानेन सूत्रकारेणेत्थं सूचितम्—साहसं हि विशिष्टहेतुमन्तरेण न भवति । अतस्तत्र तादृशो हेतुरेव प्रयोजकः । स एव मनुष्येण साहसं कर्म कारयति । तत्र प्रयोज्यकर्ता मनुष्यस्तु निमित्तमात्रम् । तथा च तत्र साहसं कर्म जायते साहसं कर्म भवतीत्येतादृशो वाक्यप्रयोग उचितो नतु साहसं कर्म तेन क्रियत इति साहसं कर्म स कुरुत इति वा । भवति क्रियत इत्यनयोरन्तरं तु प्रसिद्धमेव । ' न प्रकुप्यति दुर्वासाः प्रसुप्तेनाऽऽहतः पदा ' इति न्यायात् । सुषुप्त्यवस्थायां हि पादाघातो जायते न तु क्रियते । एतादृशं च साहसं कर्म यत्र भवति तत्र विशिष्टहेतुनोपरक्ते मनसि विवेकः क्षणं लुप्त इव भवतीत्यतो विवेकशीलानामपि वसिष्ठसदृशानां साहसोपपत्तिः । एतेन हरदत्तकृतो वसिष्ठसदृशानां विवेकिनां साहसोदाहरणत्वेन निर्देशो न संगच्छत इत्यपास्तम् । ' बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ' इत्युक्तेः । एतावान्परं विशेषः । अविवेकी प्रतीकारसामर्थ्यमविचार्यापि प्रवर्तते । विद्वांस्तु विवेकी प्रतीकारसामर्थ्यं दृष्ट्वैव प्रवर्तते । एतेन विवेकिनामपि साहसं चेद्विवेको निष्फल इति परास्तम् । तस्माद्धर्मपरिवर्तनमेतदित्याधुनिकानां भ्रम एवेति सिद्धम् ।

तथा धर्मस्य परिवर्तनं नैव भवतीत्येतद्भगवदुक्त्याऽप्यवगम्यते—

> यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
> अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् (भ. गी. ४।७) ॥

इति हि भगवद्वचनम् । पुण्यजनकं विहितं कर्म धर्मशब्देनोच्यते । तत्र भूयसां जनानामप्रवृत्तिर्धर्मस्य ग्लानिः । तथा पापजनकं निषिद्धं कर्माधर्मशब्देनोच्यते । तत्र भूयसां जनानां प्रवृत्तिरधर्मस्याभ्युत्थानम् । तत्रेदृशं कर्म पुण्यजनकमित्येवं यदि तस्य कर्मणः स्वरूपं किंचिन्निश्चितं स्यात्तथेदृशं कर्म पापजनकमित्येवं यदि तस्य कर्मणः स्वरूपं किंचिन्निश्चितं स्यात्तदेव तत्र कर्मणि भूयसां जनानां प्रवृत्तिरप्रवृत्तिर्वाऽवलोकयितुं शक्या भवेन्नान्यथा । धर्मपरिवर्तनवादिभिस्तु भूयसां जनानां यत्र कर्मणि प्रवृत्तिर्दृश्यते तदेव कर्म तदानीं धर्म इति परिज्ञातव्य-

मित्येवं तत्तत्कालानुसारेण भिन्नभिन्नं धर्मस्वरूपमभ्युपेयते । तथा च धर्म-ग्लानिरधर्माभ्युत्थानं च नैव तैरनुसंधातुं शक्यते । भूयांसो जना यदनुतिष्ठन्ति स एव तदानीं धर्मश्चेत्र कदाऽपि धर्मस्य ग्लानिरधर्माभ्युत्थानं चेति ' यदा यदा हि ' इति भगवद्वचनं विरुध्यते ।

अत्रेदमवधेयम्—धर्मग्लानिप्रयोजका अधर्माभ्युत्थानप्रयोजकाश्च पुरुषाः प्रत्येकं त्रिविधाः । ये चैवं जल्पन्ति—' संध्यावैश्वदेवाग्निहोत्रादिर्विहितत्वा-द्धर्म इति सत्यमेव । तथा प्रौढविवाहचाण्डालस्पर्शादिश्च निषिद्धत्वादधर्म इति सत्यमेव । किंतु किं कुर्मः सांप्रतं संध्याग्निहोत्रादिर्धर्मोऽप्यनुष्ठातुं न शक्यते, तथा चाण्डालस्पर्शादिरधर्मोऽपि परिहर्तुं न शक्यते का गतिरिति । एषा प्रथमा विधा । एते च धर्मं धर्मत्वेनाधर्मं चाधर्मत्वेन जानन्तीत्येतदंशेन स्वतन्त्रप्रज्ञाः किंतु विहिताकरणाद्धर्मग्लानिप्रयोजका निषिद्धपरिहाराकरणा-च्चाधर्माभ्युत्थानप्रयोजका इति जघन्या एव । ये च पुरुषाः को धर्मः कश्चाधर्म इत्येवं तयोः स्वरूपमवगन्तुं स्वयमसमर्थाः परतन्त्रप्रज्ञास्तयोर्धर्मा-धर्मयोः स्वरूपावगमाय लोकधुरीणानवलम्बन्ते । लोकैर्महात्मत्वेन परि-गृहीता धुरीणाश्च संध्याग्निहोत्रादिकं नाऽऽचरन्तीति न स धर्मः, चाण्डाल-स्पर्शादिकं च न परिहरन्तीति स नाधर्म इत्येवं धर्माधर्मयोः स्वरूपं विप-रीतं भ्रान्त्या मन्यन्ते । एषा द्वितीया विधा । एते च विहिताकरणाद्धर्म-ग्लानिप्रयोजका निषिद्धपरिहाराकरणाच्चाधर्माभ्युत्थानप्रयोजका इति जघन्या एव । किंतु धर्माधर्मस्वरूपस्य वैपरीत्येन ज्ञानात्पूर्वेभ्योऽपि जघन्यतराः । ये च पुरुषाः स्वतन्त्रप्रज्ञंमन्या धर्मपरिवर्तनवादिन एवं जल्पन्ति—भूयोभि-र्जनैरननुष्ठानात्संध्याग्निहोत्रादिर्न धर्मः, तथा भूयोभिर्जनैरनुष्ठानाच्च प्रौढ-विवाहचाण्डालस्पर्शादिर्नाधर्म इति । एतैश्च धर्मे धर्मत्वमपह्नुत्य तत्राधर्मत्व-स्याऽऽरोपकरणादधर्मे चाधर्मत्वमपह्नुत्य तत्र धर्मत्वस्याऽऽरोपकरणादेते जघन्यतमाः । ईदृशी च तेषां बुद्धिस्तामसीति भगवता निन्दितैव । तदुक्तम्—

> अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
> सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी (भ० गी० १८।३२)॥ इति ।

एवं च धर्मपरिवर्तनं भगवद्वचनविरुद्धत्वाद्भगवतो नैव संमतमिति स्थितम् ।

किंच कृते चतुष्पाद्धर्मः पादोनस्त्रेतायां ततोऽपि पादेन न्यूनो द्वापरे कलौ चैकपादेवेत्येवं युगभेदेन धर्मस्य ह्रासः पुराणेषूक्तो धर्मस्य परिवर्तनमपी-

लत्वे नैव संगच्छते । यस्मिन्कस्मिन्नपि युगे यदा बहुभिर्जनैर्यथाऽनुष्ठीयते तदा स धर्म इत्येवं सदा चतुष्पादेव धर्मः स्यात् । तत्र ह्रासो नोपपद्यते । किंच 'एवं वर्तमान उभौ लोकावभिजयति' इति धर्मसूत्रम् । धर्मप्रकरणादेवं वर्तमान इत्यस्य धर्मेण वर्तमान इत्यर्थः । 'धर्मेण वर्तमानः परमां गतिमाप्नोति' इति वैखानसभरद्वाजाभ्यामुक्तम् । 'धर्मः संसेवितः शुद्धस्त्रायते महतो भयात्' इति प्रकृत्य 'तस्माद्धर्मो यथाशक्ति यत्नात्सेव्यो नृभिर्बुधैः' इति च स्मृतिकाराः पठन्ति । एवमादीनि प्रमाणानि पश्यन्धर्मानुष्ठाने निःशङ्कं प्रवर्तते पुरुषः । किंतु धर्मस्य परिवर्तनशीलत्वे तस्य पुरुषस्य मतिः संदिग्धा भवेत् । यथा 'मयेदानीं यादृशं कर्म धर्म इत्यनुष्ठीयते तादृशं कर्म यदि बहुभिर्जनैर्नानुष्ठितं भवेत्तर्हि तदनुसारेण धर्मस्य परिवर्तने मदनुष्ठितस्य कर्मणो धर्मत्वमपेयात्किमिति । एवं च धर्मस्य परिवर्तनशीलत्वे निरुक्तसंशयस्य निराकरणं दुःसंपादं भवति ।

अन्यच्च परिवर्तनशीला येऽर्था लोके लक्ष्यन्ते पत्रपुष्पफलादयः शरीरकेशादयश्च तेषां परिवर्तनं स्वल्पेन महता वा नियतेन केनचित्कालेन जायमानं दृश्यते, तथा नियतेनैव केनचिद्रूपरसादिविशेषेण जायमानमालक्ष्यते, तथा धर्मस्य परिवर्तनं चेत्तदपि केनचिन्नियतेनैव कालेन नियतेनैव च केनचिद्रूपेण भवितव्यम् । तदनुसारेण च सांप्रतं विद्यमानो धर्मोऽग्रेऽमुकेन कालेनामुकेन च रूपेण परिवर्तितो भविष्यतीत्येवं परिवर्तनवादिभिर्वक्तव्यं तत्तु तैर्नैव वक्तुं शक्यते नैव च ज्ञायते । तस्माद्धर्मः परिवर्तनशीलो नास्तीत्येव सिद्धं भवति ।

अपरं च परिवर्तनशीलो यः पदार्थो लोके प्रसिद्धस्तत्र परिवर्तनात्प्राक्तनं यत्तस्य पदार्थस्य स्वरूपं तथा परिवर्तनोत्तरकालिकं च यत्तस्य पदार्थस्य स्वरूपं तयोः सामान्यं किंचिदवश्यमास्थेयं भवति यत्सामान्यं पुरस्कृत्य परिवर्तनाश्रयस्य वस्तुनो नाम्ना निर्देशः क्रियते 'अमुकवस्तुनः परिवर्तनम्' इति । यथाऽऽम्रफलं पक्वावस्थायां रूपेण परिवर्तितम् । तत्रापक्वे पक्वे चेत्यवस्थाद्वयेऽपि 'इदमाम्रफलम्' इत्येवं प्रत्यभिज्ञा केनचित्सामान्यस्वरूपेण जायते । द्वयोरप्यवस्थयोः सामान्याकारस्यैक्यात् । परिवर्तनं तु रूपेण । उक्तयोर्द्वयोरवस्थयोः सामान्याकारः कश्चिदवश्यमेवाऽऽस्थेयो भवति । फलत्वेन सामान्याकारस्तु नात्रोपयोगी । नहि भवति कदाचिदप्याम्रफलं परिवर्तनेन श्रीफलं जातमिति । तथा च

प्रकृते धर्मपरिवर्तनवादिभिः कः सामान्याकारः को वा विशेषस्तत्रापि परिवर्तनात्मको विशेषः परिवर्तनोत्तरं च कस्तत्सर्वं प्रदर्शनीयं भवति ।

इदं चापरमत्रानुसंधेयं भवति—बीजादुत्पद्यमानोऽङ्कुरः प्रत्यक्षः । तस्मात्तस्मादङ्कुरात्पुनरुत्पद्यमानं बीजं प्रत्यक्षम् । किंतु तत्र तदुत्पादकस्योत्पत्तिसमये कीदृशो व्यापारस्तस्य नैव प्रत्यक्षम् । तदुक्तम्—

उत्पद्यतेऽङ्कुरो बीजात्पुनर्बीजं तथाऽङ्कुरात् ।
किंतु तादात्विकः स्रष्टुर्व्यापारो नावबुध्यते ॥ इति ।

अतो व्यापारविशेषस्यानवगमान्नाङ्कुरस्य बीजस्य वा परिवर्तनं संभवति । एवं च वस्तुनः प्रत्यक्षेऽपि व्यापारस्याप्रत्यक्षत्वेनाज्ञानाद्यदि तत्र परिवर्तनं न भवति तर्हि किं वक्तव्यं वस्तुनोऽपि प्रत्यक्षाभावे परिवर्तनं न स्यादिति । सदाचारजन्यो धर्मस्तु नैव प्रत्यक्षः । तदुत्पादकस्य तात्कालिको व्यापारस्तु सुतरां नैव प्रत्यक्षः । ननु सदाचारजन्यस्य पुण्यस्य धर्मत्वे धर्मस्याप्रत्यक्षत्वमस्तु नाम । यदि तु सदाचार एव धर्म इति मतं तदा धर्मस्य प्रत्यक्षं भवत्येवेति चेत्किं ततः । तावताऽपिव्यापारस्याप्रत्यक्षत्वात्परिवर्तनं नैव परिवर्तनम् । किंच सदाचारोऽपि कात्स्न्र्येन न प्रत्यक्षः । न केवलं बाह्य आचार एव सदाचारशब्देनोच्यते, किंतु सद्वासनापूर्वको यो बाह्यस्तादृश आचारः स एव सदाचारः । सद्वासनाया अप्रत्यक्षत्वादेव च दाम्भिकेषु सदाचारभ्रमो लोकानाम् । तदुक्तम्—

असाधुवृत्तयोऽप्यन्तः साधारणजनान्बहिः ।
दर्शयन्तः सदाचारं वञ्चयन्त्येव दाम्भिकाः ॥ इति ।

तत्र केचिद्विवाहप्रतिबन्धके सगोत्रत्वे विवाहकाले सद्यः समुद्भूते दत्तविधानेन गोत्रनिवृत्तिरिति भ्रममुत्पाद्य तमेव पूर्वनिश्चितं विवाहं साधयन्ति । अपरे च केचिदस्पृश्यस्पर्शं कस्यचिज्जातमपि 'नायमधर्म्यः' इत्येवं भासयन्तस्तादृशमेव तं लौकिके वैदिके च व्यवहारे निर्दोषत्वेन संग्राहयन्ति । अपरे च केचन सांप्रतं सकेशाभिर्विधवाभिः कृतं केशधारणं न विहितकर्मानधिकारप्रयोजकमिति मन्वानास्तथाविधाभिरेव च ताभिः प्रसह्य विविधानि व्रतानि कारयन्ति । तदेवमन्यच्च सांप्रदायिकपारम्पर्यक्रमागतधर्मविरुद्धं बह्वनर्गलं प्रजल्पतां वचो विषमिश्रितममृतमिवाऽऽपातरमणीयमपि परिणामे हानिकरमेवेति मत्वा न श्रद्धेयम् । किंत्वनादरणीयमेव श्रेयोर्थिभिः । अत एवोक्तम्—

दुराचारे सदाचारभ्रमं नोत्पादयेत्कचित् ।
गर्ते यस्मात्तयँल्लोकानवसाने स्वयं पतेत् ॥ इति ।

अत्र दत्तकस्य विवाहकाले गोत्रद्वयपरिपालनमावश्यकमिति तथैवास्पृश्य-स्पर्शश्च सततं परिहरणीय एवेति च पूर्वं निर्णीतम् । अवशिष्टं च केशवपन-मिदानीं मीमांस्यते—

तच्च चूडाकर्मण्युपनयने च तीर्थदर्शने व्रताङ्गदीक्षायां पित्रोर्मरणे भर्तृम-रणे च क्रियते । प्रायश्चित्ते च प्राजापत्यान्न्यूने न क्रियते किंतु पूर्णे प्राजा-पत्ये क्षौरमिति वचनात्प्राजापत्ये तदधिके च प्रायश्चित्ते कर्तव्ये तदङ्गत-याऽऽदौ विधीयते । वपनस्य प्रायश्चित्ताङ्गत्वं कथमिति चेत्—तदीयफलसाध-नोपयोगित्वादिति गृहाण । प्रायश्चित्तं हि पापापनोदकम् । प्रायः पापमिति प्रोक्तं चित्तं तस्य विशोधनमित्युक्तेः । पापस्य चाश्रयीभूताः केशा इति प्रथमतो वपनेन पापस्याऽऽधारं विनाश्य पश्चान्निराधारस्य तस्य संशोधनं सुकरं भवति । तदनुसारेणैव च तत्र संकल्पो दृश्यते—

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥ इति ।

यथा युद्धे अरथो वीरो विनाशयितुं सुकरो भवति तद्वत् । चूडाकर्मणि शिखात्वेन प्रस्थापिता मन्त्रपूता ये केशास्तेषां मन्त्रपूत-त्वादेव न तान्पापं समाश्रयतीत्यतो वपनेऽपि न ते निष्काश्या भवन्ति । किंत्वन्य एव । प्रायश्चित्तव्यतिरिक्तस्थलेऽपि तीर्थदर्शनादौ यत्र यत्र वपन-विधिस्तत्र तत्र तद्बीजं तेषां पापाश्रयत्वमेव । पितृमरणे च पुत्रदेहस्याशुचि-त्वात्तत्र पापाश्रयीभूतकेशसंबन्धेन झटिति पापसंक्रमः स्यादिति पितृमर-णश्रवणसमकालं सद्य एव क्षौरं पुत्रस्य विधीयते । योग्ये ह्यधिकरणे समीपवस्तुगतधर्मसंक्रमः शीघ्रमेव जायते । पापस्य चाशुचिः पदार्थो योग्य एव । यद्यपि कस्यचिन्मरणे तत्सगोत्रसपिण्डानां सर्वेषामेव देहा दशाहम-शुचयो भवन्ति, तथाऽपि पुत्रदेहे न केवलं तदेवाशुचित्वं विद्यते किंत्वधि-कमत्यन्तमशुचित्वम् । लोकेऽपि शरीरे क्वचिद्व्रणादिना रक्तपूयादिस्रावे तत्समीपस्थं शरीरावयवं जलादिना पुनः पुनः प्रक्षाल्य स्वच्छमवस्थापयन्ति । अन्यथा व्रणादिगतदुष्टपदार्थसंबन्धेन झटित्येव स समीपस्थः शरीरावयवो दुष्टः स्यात् । तथा च पितृमरणेन मातृमरणेन वाऽत्यन्ताशुचौ पुत्रदेहे केशाश्रि-

तानां पापानां शीघ्रतरं प्रसारः स्यादित्यतस्तत्रात्यन्तावश्यकतया मरणश्रव-णसमकालमेव पुत्रस्य क्षौरं विधीयते ।

अथ मातुः पितुर्वा मरणे पुत्रदेहस्यात्यन्ताशुचित्वं कथं तत्प्रदर्श्यते—

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः ॥

तथा—पितुरब्दमिहाऽऽशौचं तदर्धं मातुरेव च ।
मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ।
अन्येषां तु सपिण्डानामाशौचं माससंमितम् ॥

इति वचनानि । अस्यार्थः—माता च पिता च पितरौ । यस्य माता मृता पिता वा मृतस्तस्य देहः संवत्सरपर्यन्तमशुचिः । तथा चानाधिकारात्तदव-स्थायां दैवं पित्र्यं वा कर्म तेन न कर्तव्यम् । संध्यादिकं नित्यं कर्म तु भवत्येव । एकादशाह आशौचनिवृत्तावपि संध्यादिनित्यकर्मव्यतिरिक्तं कर्म न कर्तव्यमित्यर्थः । युक्तं चैतत् । ' त्रीणि मातृतस्त्रीणि पितृतः '( ... ) इत्युक्तरीत्याऽपत्यशरीरे मातृशरीरस्य पितृशरीरस्य चान्वयोऽस्त्येव । तथा चापत्यशरीरेऽपत्यत्वोपाधिविशिष्टस्य जीवस्य मातृत्वोपाधिविशिष्टस्य जी-वस्य पितृत्वोपाधिविशिष्टस्य जीवस्य चेत्येवं त्रयाणां जीवानां संबन्धः । तत्रापत्यजीवस्य प्राधान्येन संबन्धः । तेनैव साक्षाद्भोगसाधनत्वेन परि-गृहीतत्वात् । मातृजीवस्य पितृजीवस्य च संबन्धस्तत्रांशतो विद्यमानोऽप्य-प्रधानः । अतस्तच्छरीरमपत्यशरीरमिति व्यवह्रियते न तु मातृशरीरमिति पितृशरीरमिति वा । प्राधान्येन व्यपदेशा भवन्तीति न्यायात् । अतश्च यथा मातृमरणे प्रेतीभूतं मातृशरीरं मातृत्वोपाधिविशिष्टजीवसंबन्धस्य विनष्टत्वाद-शुचि भवति तथा तदैवापत्यशरीरमपि तत्रांशतो विद्यमानस्य मातृत्वोपाधि-विशिष्टजीवसंबन्धस्य विनष्टत्वादशुचि प्रेततुल्यं भवतीति । एवं पितृम-रणेऽप्यूह्यम् । तत्रापत्यशरीरात्पितृजीवस्य मातृजीवस्य वा व्यपगमेऽपि न तत्र प्रेतव्यपदेशः । तच्छरीरस्य साक्षाद्भोगसाधनत्वेन परिग्रहीतुस्तत्संबद्ध-स्यापत्यजीवस्य मुख्यस्य ततो व्यपगमाभावात् । एतच्चाशुचित्वमुत्तरो-त्तरं न्यूनमिव भवत्संवत्सरान्ते सर्वथा निवर्तते । यतो मृतस्य संवत्सरान्ते एव प्रेतत्वनिवृत्तिपूर्वकं पितृत्वप्राप्तिर्भवति । सपिण्डीकरणोत्तरं हि पितृत्व-प्राप्तिः । सपिण्डीकरणं च संवत्सरान्ते विहितम् । वृद्ध्यर्थमपकर्षेणार्वाग्द्वाद-शाहादौ सपिण्डीकरणेऽप्यशुचित्वकारणस्य मातृपितृशरीरान्वयस्याविनष्ट-

त्वादपत्यदेहेऽशुचित्वमस्त्येव । केवलं सपिण्डीकरणेन तदशुचित्वमाच्छाद्य कर्मानधिकारो व्यावर्त्यत इत्येव । अतस्तदवस्थायां वृद्धिश्राद्धाचरणं गौणमेव । संवत्सरोर्ध्वं तु मुख्यमिति ज्ञेयम् । एतच्चापत्यशरीरे संवत्सरपर्यन्तं यदशुचित्वमुक्तं तत्पुमपत्यशरीर एव । न तु स्त्र्यपत्यदेहे । तथा हि–स्त्रीणामुपनयनस्थाने विवाह इति ततः प्राक्तस्याः स्वभावसिद्ध एव कर्मानधिकारः । विवाहोत्तरं तस्याः कर्मण्यधिकारः प्राप्नोति । स च न केवलायास्तस्याः किंतु भर्त्रा सहैव । दम्पत्योः सहाधिकारात् । सहाधिकारे च न द्वयोः समप्राधान्यम् । नापि पत्न्याः । किंतु भर्तुरेव प्राधान्यम् । पत्नी तु भर्तुरभ्यन्तरीभूय तदनुषङ्गेणाधिकारिणी भवति । अभ्यन्तरीभावश्च पाणिग्रहणमन्त्रबलाज्जायते । वधूशरीरं वरानुसंहितमन्त्रमयेन सूक्ष्मेणादृष्टेन शरीरेण कवचेनेवाऽऽच्छादितं भवतीति यावत् । यच्च लोके तत्तत्कर्मकाले कर्ता पत्नीपाणिस्पृष्टदक्षिणपाणिर्भवति तदभ्यन्तरीभावभावनायाश्चिह्नम् । यच्च काचिदेकाकिनी कर्म करोतीति दृश्यते तत्रापि सा भर्तुरनुज्ञयैव करोति । तदानीमपि च सा पूर्वोक्तेन मन्त्रमयेनादृष्टेन सूक्ष्मेण देहेनाऽऽच्छादिताऽस्त्येव । एवं स्थिते यदि कदाचित्पितृमरणेन पुमपत्यस्येव स्त्र्यपत्यस्यापि देहे संवत्सरपर्यन्तमशुचित्वं स्यात्तदा तेन कथं कर्मानधिकारः स्यात् । यतः सोऽशुचिर्देहो मान्त्रिकवेष्टनेनान्तर्भूतः । तथा च यथाऽन्तःपुष्पवत्यपि नारी यावन्न बहिर्दृश्यते रजस्तावन्नाशुचिस्तथैवेयमिति बोध्यम् । यथा चापत्यशरीरगतस्य पितृशरीरान्वयस्य पितृमरणोत्तरं संवत्सरपर्यन्तमशुचित्वं तथा पत्नीशरीरावरणभूतस्य भर्त्रनुसंहितमन्त्रमयस्यादृष्टशरीरस्य भर्तृमरणोत्तरं संवत्सरपर्यन्तमशुचित्वम् । भर्तृशरीरादिव तादृशमन्त्रमयादृष्टशरीरादपि भर्तृमरणेन भर्तृजीवव्यपगमात् । प्रेतत्वनिवृत्तिश्च संवत्सरान्त इत्युक्तमेव । अपत्यशरीरगतमशुचित्वं च संवत्सरान्त एकपद एव निवर्तते । यदि च क्रमशस्तन्निवृत्तिरिति पक्षस्तदा त्वेवं प्रतिभाति । अपत्यशरीरगतमान्तरं धातुत्रयं पितृतः, बाह्यं च धातुत्रयं मातृतः प्राप्यते । त्वगसृगादिधातूनां चोत्तरोत्तरं बलीयस्तया पितृमरणेन प्राप्तमान्तरधातुगतमशुचित्वं तत्संबन्धेन बाह्यधातुत्रयेऽपि संक्रामति । एकस्मिन् ऋतावेकस्य धातोः शुद्धिरिति षण्णां धातूनां शुद्ध्यर्थमृतुषट्कपरिमितस्य संवत्सरस्यापेक्षा भवति । किं त्वेवं शुद्धिर्मातृमरणे ऋतुत्रयेणैव स्यात् । तदानीं मातृतः प्राप्तं बाह्यं धातुत्रयमेवाशुचि भवति । नतु तत्संबद्धमभ्यान्तरम् । बलीयसि दुर्बलधर्मसंक्रमो न नियतः । न चात्र तादृशधर्मसंक्रमे किंचित्प्रमाणमुपलभ्यते । तथा

च बाह्यधातुत्रयस्य शुद्धिर्ऋतुत्रयेणैवेति । एतदभिप्रायेण–पितुरब्दमिहाऽऽशौचं तदर्धं मातुरेव चेत्युच्यते । भार्या तु वैवाहिकमन्त्रबलेन भर्तुरेकत्वं गतेत्येकत्वाभिमानात्तन्मरणे भर्तृशरीरे सामान्यतोऽशुचित्वं समुत्पद्यते । तच्च मासत्रयेणापगच्छति । एतदुक्तं भवति । संबन्धस्य संबन्धिनौ द्वौ । तयोश्च क्वचित्कार्यविशेषे समप्राधान्यं क्वचित्त्वन्यतरस्य । तच्च योग्यताबलादनुसंधेयं भवति । पतिपत्न्योर्दाम्पत्यसंबन्धेऽन्योन्यं स्वात्मत्वेन भावनायामविशिष्टायामपि पत्या मन्त्रानुसंधानपूर्वकं स्वाभ्यन्तरीकृता भवति पत्नी । ततस्तदनुसारेण सा तदभ्यन्तरीभूता भवति । अतस्ताद्दशसंबन्धे पत्युः प्राधान्यमिति यथा पतिमरणे संवत्सरपर्यन्तं पत्नीदेहस्याशुचित्वं, न तथा पत्नीमरणे पतिदेहस्येति । एवं मातुः पितुर्वा पुत्रेण सह यः संबन्धस्तत्र प्राधान्यं मातुः पितुश्च भवति । न तु प्रकृतविषये पुत्रस्य प्राधान्यम् । पुत्रशरीरे हि मातृपितृशरीरान्वयो नतु मातृशरीरे पितृशरीरे वा पुत्रशरीरान्वयः । अतः पुत्रमरणे मातुः पितुर्वा शरीरे न संवत्सरमशुचित्वं किंतु सार्धमासपर्यन्तमेव भवेत् । भ्रात्रोर्मिथः सहोदर्यसंबन्धे संस्कारादिविषये ज्येष्ठस्य प्राधान्येऽपि प्रकृतविषये द्वयोः समप्राधान्यम् । मातृद्वारा पितृद्वारा वा तयोर्मिथः संबन्धसाम्यात् । अतस्तत्रान्योन्यस्य मरणेऽन्योन्यशरीरस्याऽऽशौचं सममेव । तच्च पूर्वापेक्षया न्यूनमिति सार्धमासपर्यन्तं कल्प्यते । एवमन्यत्रोह्यम् । तथा च यथा पितृमरणेनात्यन्ताशुचिभूते पुत्रदेहे पापाश्रयीभूतकेशसंबन्धेनान्यत्र शीघ्रमेव पापसंक्रमः स्यादित्यतः पितृमरणे सद्य एव वपनं विधीयते तथा भर्तृमरणेनात्यन्ताशुचिभूते भार्यादेहे पापाश्रयीभूतकेशसंबन्धेनान्यत्र शीघ्रमेव पापसंक्रमः स्यादित्यतो भर्तृमरणे सद्य एव भार्याया वपनं विधीयते ।

तथा च यथा—आत्मा वै पुत्रनामासीत्युक्तेः पिता पुत्रं स्वात्मभूतमेव भावयति तथा भर्ताऽपि स्वां भार्यां वैवाहिकमन्त्रबलात्स्वात्मभूतामेव भावयति । आशौचमप्युभयोः समानमेव । यथा दशाहोत्तरं पितृमरणे ज्ञातेऽतिक्रान्ताशौचं पुत्रस्य दशाहमेव तथा भार्याया अपि अतिक्रान्ताशौचं दशाहमेव । यथा चाऽऽशौचसंपातेऽपि पितृमरणनिमित्तं पुत्रस्याऽऽशौचं न निवर्तते तथैव भर्तृमरणनिमित्तं भार्याया आशौचं न निवर्तते । एवं पुत्रभार्ययोः साम्यं चेत्पुत्रस्येव भार्याया अपि तुल्ययोगक्षेमत्वाद् भर्तृमरणे सद्यो वपनमावश्यकमेव भवति । तच्च वपनं पापाश्रयकेशदूरीकरणेन यथा स्वशुद्ध्यर्थं भवति तथा मृतमप्युपकरोत्येव । अन्यथा दोषोक्तेः । तदुक्तम्—

विधवाकबरीबन्धो भर्तृबन्धाय जायते ।
शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥ इति ।

यश्चायमाधुनिकानां केषांचित्प्रलाप एतादृशि वचनानि प्रक्षिप्तानीति तत्रेत्थ- मुच्यते—किं तत्र प्रक्षेपे बीजं श्रुतिविरोधो वा स्मृत्यन्तरविरोधो वा । उभ- यथाऽपि न संभवति । विधवया वपनं न कार्यमित्यर्थस्य श्रुतिस्मृतिष्वसंस्पर्शात् । तादृग्वचनकर्तृणां विधवासु द्वेषश्चेत्स कथं त्वयोन्नीतः । प्रत्युत तासु दयैव तेषाम् । पूर्वदुरितेनेयमवस्थाऽऽसां संप्राप्ता पुनरीदृश्यवस्था जन्मान्तरे मा भूदिति मत्वैव हि ते पापदूरीकरणाय तादृशि वचनानि पठन्ति । नहि राजाधिकारिभिश्चोरस्य शिक्षायां कथितायां न तत्र तेषां द्वेषो लोकैः प्रक- ल्प्यते, प्रत्युत न्याय एव तद्वत् । प्रक्षेपे हेत्वन्तरं तु किंचित्कल्प्यमानं पार्थ- न्तिकविचारे हेत्वाभासरूपमेव भवेत् । तस्माद्विधवया वपनं कार्यमिति सिद्धम् । दूरस्था भार्या चेत्पतिमरणश्रवणोत्तरं सद्यो वपनं कार्यमेव । केवलं केशानां भालसंयोजनं तत्र नास्ति । तत्र तीर्थादौ केशाः प्रक्षेप्तव्याः । अप्राप्तयौवना भार्या चेन्न भर्तृमरणकाले तस्या वपनं, किंतु यौवनप्राप्त्युत्तर- मेव । तत्रापि भालसंयोजनं नास्ति । तत्र च तया भर्तुर्मरणादारभ्याद्यया- वत्स्वेच्छालापमाविहरणभक्षणकेशादिसौभाग्यचिह्नधारणजनितसकलदोषक्ष- यार्थं प्रायश्चित्तं कृत्वा भर्तुः श्राद्धं कार्यमिति ।

मृते भर्तरि या नारी आद्यवर्णत्रयोद्भवा ।
शिरोरुहान्दधात्येषा सर्वधर्मबहिष्कृता ॥

इति स्मृतिसंग्रहधृतवचनेन धर्म्येषु सर्वकर्मसु तस्या अधिकाराभा- वो बोध्यते । यच्च कैश्चिदुच्यते ब्राह्मणानामपि सांप्रतं ब्राह्मणत्वोचित- कर्माभावदर्शनात्तेषामप्यनधिकार एव देवपूजादिकर्मस्विति । तत्रोच्यते— यदि पातित्यापादकेन महापातकादिदुष्कर्मणा युक्तो लोकानां दृष्टिपथमा- गच्छेत्तर्हि सोऽपि सर्वधर्मबहिष्कृतः सन् विहिते कर्मण्यनधिकृतो भवेदेव । यच्च क्षुद्रं पातकं पातित्यानापादकं न तेन स लोकबहिष्कृतो भवति, स च कर्मण्यनधिकृतो न भवति । किंतु तेनापि तादृशपातकविनाशाय प्रायश्चित्तं कार्यमेव । सर्वथा विधवाभिः केशधारणं पातित्यापादकमित्यतः पतिमरणे सद्य एव केशवपनं कार्यमिति सिद्धम् । अथ विधवाकेशवपनविषये स्पष्टो विधिः श्रुतौ क्वापि न दृश्यत इति य उद्घोष आधुनिकानां केषांचिच्छ्रूयते तत्रेत्थमुच्यते—किं सर्व एवार्थाः श्रुत्या स्पष्टं प्रतिपादयितव्याः प्रतिपा-

दिवा एव वेति तवाभिमतम् । आचार्यपाणिनिविषये च महाभाष्यकारैरि- ङ्गितेन चेष्टितेन निमिषितेन महता च सूत्रप्रबन्धेनाऽऽचार्याणामभिप्रायोऽव- गम्यत इत्युक्तम् । तथा च ऋषिरपि न बोद्धव्यानखिलानर्थान् स्पष्टं प्रति- पादयति किंतु कांश्चिदादिशति कांश्चिच्च प्रकारान्तरेण सूचयति, किमुत श्रुतिविषये तथा स्यादिति वक्तव्यम् । आचमनविधिः, तद्विशेषाश्च क्वचि- देकवारं क्वचिद्द्विवारमित्यादयः । प्राणायामविधि', बहिर्जानु तन्निषेधः—

'धौतवस्त्रधरः कुर्यात्सर्वकर्माणि संयतः ।
विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च ॥
श्रौतं स्मार्तं तथा कर्म नैव कुर्याद्विचक्षणः ' ।
नग्नो मलिनवस्त्रो जीर्णवस्त्रोऽनाच्छादितजानुश्च

इत्येतादृशास्तत्तद्विशेषविधयो न श्रुतौ सर्वे संदृश्यते । किंच यथा विधवा- वपनविधिः श्रुतौ साक्षान्न दृश्यते तथा विधवावपननिषेधोऽपि श्रुतौ साक्षा- न्नैव दृश्यत इति कोऽयं तत्राभिनिवेशो भवतः, यद्ब्राह्मणक्षत्रियविशां स्त्रीणां वपनमिष्यत इति मात्स्यवचनमप्रमाणी करोषि । प्रत्युत—

विधिर्वा प्रतिषेधो वा श्रुतौ यत्र न दृश्यते ।
तत्र संदिग्धचित्तानां स्मृतयो मार्गदर्शिकाः ॥

इत्युक्तेस्तथाविधे विषये वपनमेवाङ्गीकर्तव्यं भवति ।

भारतीययुद्धोत्तरं युद्धे मृतानां पुरुषाणां स्त्रीभिः कथमाचरणं कार्यमि- त्येवं धर्मराजेन पृष्टस्य श्रीकृष्णस्योक्तिरियम्—

ब्राह्मणक्षत्रियविशां स्त्रीणां वपनमिष्यते ।
शूद्राणामन्त्यजातानां स्त्रीणां न वपनं भवेत् ।
अजातयौवनानां च तत्काले वपनं नहि ॥ इति ।

पतिमरणोत्तरं स्त्रीणां केशवपने मन्त्रलिङ्गमपि दृश्यते । आथर्वणसंहिता- याम्—'यदीयं दुहिता तव विकेश्यरुदद्गृहे रोदेन कृण्वत्यघम् । अग्निष्टा तस्मादेनसः सविता च प्रमुञ्चताम्' (अ. २ सू. २) इति । यदीयं तव दुहिता केशरहिता रोदनेन पातकं संचिन्वाना स्यात्तर्हि तस्मात्पातकादग्निः सविता च त्वां प्रमुञ्चतामिति तस्यार्थः । अत्र विकेशीतिपदेन केशरहिता- वस्था स्पष्टमेव प्रतिपादिता भवति । न चात्र विकेशीत्यस्य व्यपगतकेशी- त्यर्थो भाष्यकृद्भिर्न प्रतिपादित इति चेत्तत्र तथाऽर्थो न ग्राह्य इत्यपि भाष्य-

कारैर्नैवोक्तमिति ते कुतो न बुद्धिमारोहति । अर्थश्च प्रसिद्ध इति भाष्य-कारास्तत्रोदासीना एव । यस्मिंश्च शब्दे श्रुते सद्य एव योऽर्थो बुद्धिमारोहति सोऽर्थस्तस्य शब्दस्य प्रसिद्धोऽर्थ इत्युच्यते । भवतोऽपि बुद्धौ विकेशीतिपद-श्रवणकाले विगतकेशीत्ययमेवार्थः प्रथमत उपस्थितः स्यादेवेति स्वयमेव स्वान्ते विचारय ।

नन्वाथर्वणसंहितायामन्यत्र ' प्रतिघ्नानाऽश्रुमुखी कृधुकर्णी च क्रोशतु । विकेशी पुरुषे हते रदिते अर्बुदे तव ' ( अ० ५ सू० ११ ) इति मन्त्रे भाष्यकारैर्विकेशीत्यस्य विकीर्णशिरोरुहेत्यर्थः प्रतिपादितो दृश्यते । अर्बुदिः सर्पाभिमानिदेवता । साऽत्र प्रार्थ्यते—हे अर्बुदे मम शत्रोः सैन्ये तव रदिते दन्तव्यापारे संचलिते तेन शत्रुभूते पुरुषे हते मृते सति तदीया जाया प्रति-घ्नाना प्रतिमुखं वक्षस्ताडयन्ती अश्रुमुखी बाष्पमुखी कृधुकर्णी कर्णाभरण-परित्यागेन ह्रस्वकर्णी विकेशी विकीर्णशिरोरुहा च सती क्रोशतु रोदनं करोत्वित्यर्थः । तथा चात्रापि विकेशीतिपदस्य विकीर्णकेशीत्यर्थः स्या-दिति चेत्—किं ततः । न हि दृष्टान्तमात्रेण कस्यचिदर्थस्य सिद्धिर्भवति । दृष्टान्तो हि साध्यार्थस्य दार्ष्टान्तिके संभवमात्रं साधयति न तु निर्णयम् । निर्णयस्तु प्रमाणान्तराधीन एव । यथाऽग्निः शीतो द्रव्यत्वाज्जलवदित्युक्ते गुणकर्मादौ द्रव्यत्वाभावाच्छैत्यगुणस्यासंभव इति तादृशासंभवोऽग्नेर्द्रव्य-त्वाज्जलदृष्टान्तेन निवर्त्यत इत्येव न तु तत्र दृष्टान्तेन शैत्यं साधितं भवति । अपरं चात्र दृष्टान्त एव तवापेक्ष्यते चेत् ' यस्ते मदोवकेशो विकेशो येनाभिहस्यं पुरुषं कृणोषि ' ( अ० ३ सू० ११ ) इति मन्त्रे भाष्यकारैर्वि-केशपदस्य केशविगमनहेतुरित्यर्थः प्रतिपादितस्तत्र निधेहि दृष्टिम् ।

अथ यदि दृष्टान्तेनात्र न निर्णयस्तर्हि्यत्र विकेशीशब्दार्थः कथं निर्णेयः । कुतो वा प्रतिघ्नानेति पूर्वोदाहृते मन्त्रे भाष्यकारैर्विकेशीपदस्यार्थो विकीर्ण-शिरोरुहेत्येवं गृहीत इति चेदुच्यते—विकेशीत्यस्य विकीर्णकेशा विगतकेशा चेत्यर्थद्वयम् । तत्र विकीर्णकेशावस्था बद्धकेशावस्थायाः प्रतिद्वंद्विभूता । विग-तकेशावस्था च सामान्यतः केशयुक्तावस्थायाः प्रतिद्वंद्विभूता । तत्र पूर्वप्रक्रा-न्तेऽर्थे विशेषावस्थावगमश्चेत्तत्प्रतिद्वंद्विभूतैवावस्था तदुत्तरं निरूपणीया भवति । यदीयं दुहितेतिमन्त्रात्पूर्वस्मिन् पापप्रमोचनार्थक एव मन्त्रे ' यदीमे केशिनो जनाः ' इत्यत्र केशिन इति पदेन केशयुक्तावस्थोपस्थिताऽभूत् । अर्थादेव च तदुत्तरस्मिन् यदीयं दुहितेति मन्त्रे पूर्वोपस्थितावस्थाप्रतिद्वंद्विभूता विग-

तकेशावस्थैव ग्राह्या भवति । प्रसिद्धत्वाच्च विगतकेशेत्येवार्थो ग्राह्य इत्यु-क्तमेव ।

नन्वेवं प्रतिष्ठानेति मन्त्रे प्रसिद्धार्थं परित्यज्य विकीर्णकेशेत्यर्थो गृहीतस्तत्र किं बीजमिति चेत्—शृणु । विकीर्णकेशावस्था हि भर्तृमरणकालिकी तदनन्तरभाविनी च विगतकेशावस्था । प्रयोगकारैर्ग्रथिते विधवा-केशवपनप्रयोगे चेत्थं क्रमो दृश्यते । भर्तृमरणक्षणे स्वोरस्ताडनादिनैसर्गिक-क्रियायुताऽऽक्रोशन्त्यश्रुमुखी केशबन्धं विश्लिष्य विस्तीर्णकेशावस्थैव सचैलं सशिरः स्नात्वा स्नानेन चाऽऽर्द्रैः केशैः कुङ्कुमं परिमृज्य माङ्गल्यसूत्रत्रोटनं च कृत्वा कर्णाभरणादीन्निष्काश्य च केशान् वापयेत् । ततस्तान् सकुङ्कुमान् केशान् प्रेतभाले संयोज्य तेन सह भर्तृप्रेतदाहं कुर्यात् । एतद्भालसंयोजनं संन्यस्ते पतिते वा भर्तरि नास्ति । तत्र केशानां तीर्थादौ प्रक्षेप इति बोध्यमिति । तत्र प्रतिष्ठानेति मन्त्रे पुरुषे हत इत्यनेन मरणकालिक्यवस्था प्रदर्श्यते । प्रतिष्ठानाऽश्रुमुखी कृधुकर्णीत्येतैश्च पदैः सैवावस्था परिचाय्यते । अतस्तात्कालिक्यवस्थाप्रदर्शको विकीर्णकेशेत्यर्थस्तत्र विकेशीतिपदेन ग्राह्य इत्युचितम् । यदीयं दुहितेति मन्त्रे तु भर्तृमरणक्षणिकावस्थापरिचायका-भावात्तदनन्तरभाव्यवस्थागतः केशविगमो विकेशीतिपदेन बोध्यत इति युक्ततरम् ।

सांप्रतं हि परिस्थितौ दृश्यमानायां गतभर्तृकासु बह्वीषु काश्चिदेव विगत-केशा दृश्यन्ते । बह्व्यस्तु न विगतकेशा नापि विस्तीर्णकेशाः किंतु बद्धकेश्य इति श्रुत्यभिप्रेतामवस्थामस्वीकुर्वन्तीनां तासां कथं दैवे पित्र्ये च कर्मण्य-धिकारः स्यात् । तदुक्तं स्कान्दे—

> कबरीसहिता यत्र विधवा च वसेद्गृहे ।
> हव्यं देवा न गृह्णन्ति कव्यं च पितरस्तथा ॥ इति ।

यत्तु कैश्चिदाधुनिकैरभिनिवेशग्रहग्रस्तैर्यदीयं दुहितेत्यत्रापि मन्त्रे विकेशी-त्यस्य विकीर्णकेशीत्येवार्थो न तु विगतकेशेत्यर्थ इति ब्रुवाणैरुत्प्रेक्षितं मृतभर्तृकाणां केशवपनं श्रुतिविरुद्धमिति तदज्ञानविजृम्भितम् । तथा हि-अभीष्टचिन्तकेन वरप्रदानोद्यतेनाऽऽशीःप्रयोक्त्राऽन्येन वा यस्य यावदभीष्टं चिन्त्यते तस्य तावदभीष्टापेक्षयाऽधिकमभीष्टं पूर्वकर्मानुसारेण प्राप्यते चेन्नैव तद्व्यवच्छेदे तात्पर्यमभीष्टचिन्तकस्य । अधिकाभीष्टप्राप्तिर्भवतु मा वा भूदभीष्ट-चिन्तकस्तत्रोदासीन एव । तथाऽनिष्टचिन्तकेन शापप्रदानोद्यतेनान्येन वा

केनचिद्यस्य यावदनिष्टं चिन्त्यते तस्य तावदनिष्टापेक्षयाऽधिकमनिष्टं पूर्व-कर्मानुसारेण प्राप्यते चेत्तस्यैव तद्व्यवच्छेदे तात्पर्यमनिष्टचिन्तकस्य । आधि-कानिष्टप्राप्तिर्भवतु मा वा भूदनिष्टचिन्तकस्तत्रोदासीन एव । नष्टपुत्रा सौभाग्यवती भवेत्यस्या वाचस्तात्पर्यं नवमपुत्रव्यवच्छेदे । न वा पौत्रवान् भवेत्यस्याः वाचस्तात्पर्यं प्रपौत्रजन्मव्यवच्छेदे । न चाप्यन्धो भविष्यसी-त्यस्या वाचस्तात्पर्यं पङ्गुत्वव्यवच्छेदे केनापि कल्प्यते । तथा यदीयं दुहिते-ति मन्त्रे विकेशीत्यस्य विस्तीर्णकेशीत्यर्थ इति त्वन्मतानुसारेणाङ्गीकारेऽपि तदपेक्षयाऽधिकस्य केशविगमनस्य व्यवच्छेदे नैव विकेशीत्युक्तेस्तात्पर्य-मिति श्रुतिविरोधोक्तिरत्र नैवावकाशं लभते । एवं च मृतभर्तृकाणां केश-वपनं नैव श्रुतिविरुद्धमिति सहृदयैराकलनीयम् ।

ननु नवोढा वधूः पितृगृहात्प्रथमत एव भर्तृगृहं गच्छन्ती यदि गमन-समये रोदनेनाघं कुर्यात्तदा तादृशरोदनजन्यादेनसः सवित्रादयो देवा मां मुञ्चन्त्विति प्रार्थ्यत इयं दुहितेति मन्त्रेण । इत एव लिङ्गाच्चतुर्थीहोमक-र्मणि प्रायश्चित्ते विनियुक्तोऽयं मन्त्रो भाष्यकारैः । तादृश्यां चावस्थायां केशविगमनस्यात्यन्तासंभवान्मन्त्रगतस्य विकेशीति पदस्य विगतकेशी-त्यर्थस्यात्यन्तानुचितत्वेन विकीर्णकेशीत्यर्थस्यैवोचितत्वेन न तत्केशव्यपग-गमे लिङ्गं भवतीति विफल एवायं पूर्वोक्तः सर्वः प्रयास इति चेत् ।

अत्रेदं बोध्यम्—जपे स्वाध्याये पारायणे च मन्त्रोच्चारणमपूर्वोत्पाद-कम् । कर्मणि विनियुक्तस्य मन्त्रस्य कर्मकाल उच्चारणं तु तादृशकर्मजन्या-पूर्वविशेषोत्पादने साहाय्यकमाचरति । उभयत्राप्यानुषङ्गिकतयाऽर्थानुसंधा-नमावश्यकमेव । तदन्तरेणापूर्वविशेषोत्पादनासंभवात् । यत्र च मन्त्रस्य तद्घटकपदस्य वाऽर्थद्वयं संभवति तत्र कर्मकाले कर्मसंबद्ध एवार्थोऽनुसं-धेयः । जपादौ तु स एवानुसंधेय इति न नियमः । प्रसिद्धार्थोऽन्यश्चेत्सोऽपि तत्रानुसंधेयो भवति । अत एवैन्द्र्या गार्हपत्यमुपतिष्ठत इति श्रुत्या गार्ह-पत्योपस्थाने विनियुक्तायाः 'कदाचनस्तरीरसि' ( तै० सं० १।४।२२ ) इत्यैन्द्र्या ऋचोऽर्थानुसंधाने मन्त्रगतस्येन्द्रपदस्य प्रसिद्धार्थं परित्यज्य इदि परमैश्वर्ये इति धात्वनुसारेण परमैश्वर्यवान् इत्येवं यौगिकार्थानुसंधानं भवति । अन्यथा गार्हपत्य इन्द्रेति संबोधनासंभवात् । जपादौ त्विन्द्रपदस्य प्रसिद्ध एवार्थोऽनुसंधेयो भवति । प्रसिद्धार्थपरित्यागे कारणाभा-वात् । एतेन यदीयं दुहितेति मन्त्रस्य चतुर्थीहोमकर्मणि प्रायश्चित्ते विनि-

युक्तत्वेन तत्र विकेशीत्यस्य विगतकेशीत्यर्थस्यासंभवात्प्रतिघ्नानाऽश्रुमु-
खीत्यत्रेव विकेशीत्यस्य विकीर्णकेशीत्येवार्थ इति न तत्केशव्यपगमे
लिङ्गमित्यपास्तम् । जपादौ केशव्यपगमरूपार्थस्य प्रसिद्धस्य ग्रहणे बाध-
काभावात् । विकेशपदस्य व्यपगतकेश इत्यर्थो मुख्यः, भाष्यकारैरन्यत्र
गृहीतश्चेति प्रागुक्तमेव । किंच प्रतिघ्नानेत्यत्रेव यदीयं दुहितेत्यत्र विकेशी-
त्यस्य विकीर्णकेशीत्यर्थो ग्राह्य इति वक्तुमशक्यमेव । विकरणं( विस्रा-
रणं ) हि बन्धविमोचनपूर्वकमखिलानां केशानामितस्ततो विस्रारणम् ।
प्रतिघ्नानेत्यत्र हि भर्तृमरणकल्पनेन बन्धविमोचनं संभवति । यदीयं दुहि-
तेत्यत्र तु पतिसंनिधानेन बन्धविमोचनस्यैवासंभवः । कस्तर्हि यदीयं दुहि-
तेत्यत्र विकेशीत्यस्य तादृशप्रायश्चित्तकर्मण्यर्थोऽनुसंधेय इति चेत्—उच्यते ।
दुहिता हि पितुर्गृहान्निर्गच्छन्ती भाविपितृवियोगजन्यमनःक्षोभेण केशबन्ध-
संरक्षणे शिथिलप्रयत्नेति केचित्केशा बन्धाद्विस्रस्ता भवन्ति । तथा च
विस्रस्तकेशीत्यर्थस्तत्र ग्राह्यो भवति । तथा च प्रतिघ्नानेत्यत्राखिलाः केशा
आहत्य बन्धं विमुच्य विस्तीर्णाः, यदीयं दुहितेत्यत्र तु केचिदेव केशा
यदृच्छयैव च बन्धमविमुच्यैव च विस्रस्ता इति महान्विशेषः ।

किंच चतुर्थीकर्मणि प्रायश्चित्ते विनियुक्तस्तदनुसारेण प्रकल्पितार्थकोऽ-
प्ययं यदीयं दुहितेति मन्त्रः प्रणाड्या विधवाकेशव्यपगमसूचको भवत्येव ।
तथा हि—तत्र हि पातकात्प्रमोकः प्रार्थ्यते । पातकोत्पत्तौ च कारणतया
रोदनं निर्दिश्यते । केवलेन च रोदनेन या पातकोत्पत्तिस्तदपेक्षयाऽधिकपापो-
त्पत्तिर्विकेशीकृतरोदनेन जायत इति विकेशीपदेन द्योत्यते । निषिद्धसेवनाच्च
पातकोत्पत्तिः । पतिसंनिधाने केषामपि केशानां बन्धाद्विस्रंसनं निषिद्धम् ।
एवं च तदवस्थायां सर्वेषां केशानां बन्धे प्रवेश आवश्यकः । दूरस्थे तु
पत्यौ बन्धो निषिद्ध इति तदवस्थायां सर्वेषां केशानां बन्धाद्विमोचनमाव-
श्यकमित्यर्थसिद्धमेव । क्रियाप्रबन्धादयमृ० ( रघु० ६ । २३ ) इति
कालिदासोक्तिरमुमर्थमुपोद्बलयति । मृतभर्तृकायास्तु न संनिहितः पति-
रिति न केशबन्धः । न चापि दूरस्थः पतिर्विद्यत इति न बन्धाविमुक्ताः
केशाः । केशानां च शिरस्यवस्थानं बन्धेन बन्धाविमोकेन वा न तु तृतीयः
प्रकारस्तत्र विद्यते । यथाऽस्य पुरुषस्य न पुत्रपत्यं न च रूपपत्यमित्युक्तेऽ-
र्थादेव स निरपत्यः सिद्धो भवति, तथा मृतभर्तृकाया उक्तप्रकारद्वयासंभ-
वेनार्थादेव केशव्यपगमः सिद्धो भवतीति ।

किंचानुमितश्रुतिरप्यत्र प्रमाणम् । यथा नैयायिकैर्मङ्गलं वेदबोधितकर्तव्यताकमलौकिकाविगीतशिष्टाचारविषयत्वाद्दर्शादिवदित्यनुमानं प्रदर्श्य मङ्गलविधायिका श्रुतिरनुमिता तथाऽत्रापि पक्षभेदेन वक्तुं युज्यते । तत्र मङ्गलं पक्षः प्रकृते तु विधवाकेशवपनं पक्ष इति भेदः । साध्यं हेतुर्दृष्टान्तश्च स एव। न चात्रासिद्धो हेतुरिति भ्रमितव्यम् । तादृशाचारस्य निरूढतरत्वात् ।

अत्र केचित् । विधवाकेशवपनस्य शिष्टाचारसंमतत्वेऽपि सांप्रतिकपरिस्थित्यनुसारेण तत्र केशधारणस्य विधिर्वपनस्य निषेधो वा परिकल्पनीय इत्याहुः । त इत्थं प्रष्टव्याः । न वाङ्मात्रेण कश्चिदर्थः सिध्यति । योऽयं विधिर्निषेधो वा परिकल्पनीय इत्युच्यते तत्र किं मूलम् । परिस्थितिरिति चेत्-परिस्थितिर्हि यादृच्छिकी लोकानां प्रवृत्तिः । विधिना निषेधेन च यादृच्छिक्याः प्रवृत्तेरसन्मार्गान्निवर्तनद्वारा सन्मार्गे संग्रहणं कार्यं भवति । स च विधिरेव निषेध एव च यदि तादृशप्रवृत्त्यनुसारी स्यात्तर्ह्यकिंचित्कर एव सः । असन्मार्गप्रवृत्तस्य राजपुत्रस्य सन्मार्गे प्रवर्तनाय नियोजितः शिक्षको यदि राजपुत्रमतिमवलम्बेत चेत्किं तेन कृतं स्यात् ।

ननु प्रकृत्यैव यासां विधवानां केशधारणे प्रवृत्तिर्न तदर्थमयं विधिर्निषेधो वा प्रकल्प्यते, किंतु यासां केशवपने प्रवृत्तिस्तदर्थं केशधारणविधिर्वपननिषेधो वा प्रकल्प्यत इति तथाविधासु तासु तदुपयोगः स्यादिति चेत्—मैवं वादीः । केशवपने प्रवृत्ता हि विधवा येन हेतुना प्रवृत्ता स हेतुर्यावन्नोन्मूलितस्तावन्न किमपि त्वदभिमतेन प्रकल्पितेन विधिना निषेधेन वा साध्यं भवेत् । तासां चेतसि विद्यमानो हेतुस्तु मृते भर्तरि निरपवादं केशानां पापाश्रयत्वम् । न हि परिस्थितिमात्रमवलोकयता त्वया प्रकल्पितस्य विधवासु केशधारणविधेर्वपननिषेधस्य वा तादृशकेशाश्रितपापोन्मूलने सामर्थ्यमस्ति । येन स विधिर्निषेधो वा तत्र चरितार्थः स्यात् । 'केशेषु पापं न विद्यते' इत्याधुनिकानामुक्तिस्तु न श्रद्धेया । केशानां पापाश्रयत्वस्याऽऽपस्तम्बसूत्रकारेण स्पष्टमेवोक्तत्वात् । तस्माद्विधवानां केशवपनमावश्यकमेवेति सिद्धम् । किंचैतादृशवपनस्यालौकिकाविगीतशिष्टाङ्गीकृताचारविषयत्वेन तद्विषये संदेह एव नास्ति ।

ये चाप्याधुनिकाः केचिद्व्यावहारिकाणि कानिचित्कारणानि प्रदर्श्य वपनं न कार्यमिति ब्रुवन्ति । अपरे च केचन स्मृतिवचनान्यपि तत्र साधकानीति मन्यमानाः प्रत्यवतिष्ठन्ते । तत्रेत्थमुच्यते—

वपनस्य सशास्त्रत्वे सिद्धे तदभावसाधनाय लौकिकहेतुप्रदर्शनमत्यन्तानुचितम् । प्रातःस्नानस्य सशास्त्रत्वे सिद्धे शैत्यपीडादिदोषपुरस्कारेण 'प्रातःस्नानं नैव कार्यम्' इति यदि केचन ब्रूयुस्तर्हि तद्वचनं शिष्टपरिगृहीतं नैव भवति ।

अथ ये केचन वपनं शास्त्रनिषिद्धमिति वदन्ति तान् प्रत्युच्यते धर्मसिन्धौ–'पितृमरणे पुत्राणां कर्तृभिन्नानामपि क्षौरं नित्यम् । एवं पत्न्या अपि प्रथमे दशमेऽह्नि वा क्षौरं नित्यम्' 'मातापित्राचार्येषु मृतेषु नियमेन दशमेऽहनि मुण्डनम् । एवं भर्तरि मृते स्त्रिया अपि मुण्डननियमः' इत्युक्तम् । तथा तत्रैव विधवाधर्मेषु—

विधवाकबरीबन्धो भर्तृबन्धाय जायते ।
शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥
एकवारं सदा भुक्तिरुपवासव्रतानि च ।
पर्यङ्कशयना नारी विधवा पातयेत्पतिम् ॥
नैवाङ्गोद्वर्तनं कार्यं गन्धद्रव्यस्य सेवनम् ।
नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ॥
न कञ्चुकं परीदध्याद्वासो न विकृतं वसेत् । इत्युक्तम् ।
कबरीसहिता यत्र विधवा च वसेद्गृहे ।
तद्गृहं निन्दितं नित्यमलक्ष्म्यायतनं परम् ॥
हव्यं देवा न गृह्णन्ति कव्यं च पितरः सदा ।
कृतं तत्राफलं सर्वं यत्र साऽफलका ध्रुवा ॥

इति वचनमप्यत्र प्रमाणमनुसंधेयम् ।

सर्वान्केशान् समुद्धृत्य च्छेदयेदङ्गुलिद्वयम् ।
एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम् ॥

इति पराशरवचनव्याख्यायां माधवेनाप्युक्तम्—नारीग्रहणेनैव कुमारीणामपि ग्रहणे सिद्धे पृथगुपादानं विधवासु वपनाङ्गीकारद्योतनार्थम् । नात्र नारीशब्दः स्त्रीमात्रवाची । किंतु सभर्तृकस्त्रीवाची । कुमार्यस्तु विवाहरहिताः । तथा च सभर्तृकाणां विवाहरहितानां चैतदुक्तं भवति । ततो विधवानां सर्वात्मना मौण्ड्यमङ्गीकृतं भवतीति । सर्वत्रैवं हि नारीणामिति पाठेऽपि नारीशब्देन सुवासिनीनामेव ग्रहणमित्यनुपदमेव वक्ष्यते ।

अत्रेदमनुसंधेयम्—

> पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
> पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ इति मनुस्मृतिः ।

अत्र रक्षणं च न केवलमन्नवस्त्रादिनैव । किंतु स्त्रीणां यो मुख्यो धर्मः पातिव्रत्यं तदनुरूपाचरणेन । पातिव्रत्यं चानन्यभावेन पतिसेवनैकप्रवणता । सा यथा स्त्रीणां मनस्यनायासेन पदमादध्यात्तथा बाल्ये समुपदेशः पित्रा यः क्रियते तत्तस्याः संरक्षणम् । न केवलमीदृश उपदेश एव किंतु तादृश-कन्यासंनिधौ पित्रा स्वभार्ययाऽन्येन वा केनापि सावित्रीमनसूयादिकानां पति-व्रतानां स्त्रीणामाख्यानादिकरणम् । तादृशाख्यानादिश्रवणेन च कन्याया मनस्युपदेशश्रवणयोग्यता संपद्यते । अन्यथा तु पुत्रादिना क्रियमाणोऽ-प्युपदेशः कर्णकटुः स्यात्, इति स बुद्धिं नाऽऽरोहेत् । एवं पित्रा कृते-नोपदेशादिनाऽधिकारसंपन्ना यौवने भर्तुर्वशे तिष्ठति । भर्ता च—

> विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
> उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥
> नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ।
> पतिं शुश्रूषते येन तेन स्वर्गे महीयते (मनु० अ० ५।१५४) ॥

इति मनूक्त्या कीदृशोऽप्यस्तु तं सेवेतैवेत्युच्यते । तेनापि च सा परि-रक्षणीयैव । तत्परिरक्षणं च न केवलमन्नवस्त्रादिनैव । किंतु स्वं सेवमाना ' सेवाधर्मः परमगहनः इति कस्यचिदुक्तिर्मृषैव । सुखद एव च सेवाधर्मः ' इति यथा मन्येत तथा तया सेवां कारयेत् । तथा भर्तृमरणोत्तरं पुत्रा-दिना परिरक्षणमपि च न केवलमन्नवस्त्रादिनैव । किंतु

> यस्मै दद्यात्पिता त्वेनां भ्राता वानुमते पितुः ।
> तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् (मनु० ५।१५१) ॥
> पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
> पतिलोकमभीप्सन्ती नाऽऽचरेत्किंचिदप्रियम् (मनु० ५।१५६) ॥

इति मनूक्त्यनुसारेण तस्या वर्तनं यथा भवेत्तथा प्रयतितव्यम् । एवं च स्त्रीणां पातिव्रत्यं मुख्यो धर्मः । तदर्थमेव चाऽऽनुषाङ्गिकतया बाल्ये पित्रा संर-क्षणं मृते च भर्तरि पुत्रादिनेत्युच्यते । अत्र जीवतो वा मृतस्य वा० नाऽऽचरेत्किंचिदप्रियमिति यन्मनुस्मृतावुच्यते तस्यायमर्थः—जीवदवस्थायां

भर्तुर्यदप्रियं तत्तन्मरणोत्तरमपि तया नानुष्ठेयमिति । भार्यायां पापसंक्रमश्च भर्तुरप्रिय एव । अतः स भार्यया भर्तृमरणोत्तरं यावच्छक्यं परिहरणीय एव । तदर्थं च पापाश्रयाणां केशानां वपनेन पापस्य निरालम्बनत्वासिद्धये भर्तुर्मरणोत्तरं सद्यो वपनमावश्यकम् । एवं वपनस्याऽऽवश्यकत्वे सिद्धेऽर्थादेव तदकरणे दोषः समुद्भवति । अत एव —

> 'मुमुक्षुः पतिना हीना या नारी केशधारिणी ।
> तस्यास्तद्धारणे ब्रह्मन्दोषो नास्तीति मे मतिः ' ॥

इति वृद्धमनुवचनेन मुमुक्षोर्विधवायाः केशसंधारणे दोषाभावं वदताऽन्यत्र दोषः सूचितः । यदि च सामान्यतो विधवायाः केशसंधारणे दोषो न स्यात्तर्हि मोक्षेच्छायां दोषो नास्तीत्युक्तिरसंगता स्यात् । प्रतियोगिप्रसञ्जनपूर्वकत्वान्निषेधस्य । न च मुमुक्षुः पतिना हीनेत्यस्मिन्वचने मुमुक्षोर्विधवायाः केशधारणे दोषाभावोक्त्या तस्याः केशवपने दोषः सूचितः स्यादिति चेत्—भ्रान्तोऽसि । उक्तवचनस्य मुमुक्षोर्विधवायाः केशधारण एव दोषाभावो नान्यत्रेत्येवं नियमपरत्वे सत्येव हि त्वदभिमतोऽर्थः सिध्येत् । नियमश्च स्वार्थस्यान्यतः सिद्धावेव स्यात् । स्वार्थश्च न कथंचनात्रान्यतः सिद्धो भवति । नहि मुमुक्षोर्विधवायाः केशधारणे दोषो नास्तीत्यर्थः प्रमाणान्तरेण सिद्धो भवति । किंचात्र नियमाकारस्त्वदभिमत एव कुतः । अन्यथापि संभवात् । विधवायाः केशधारणे दोषाभावश्चेन्मुमुक्षोरेवेति । इदं चात्रावधेयम्-विधवाकेशवपनस्य ह्येतद्वचनमपवादः । स चापवादः किमत्र नित्य ऐच्छिको वा । तथा हि—

> अपवादो द्विधा ज्ञेयो नित्यश्चैच्छिक एव च ।
> तत्रोत्सर्गानुसरणं दोषायाऽऽद्ये न चान्तिमे ॥

यथा ' सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः सदा ' इत्युत्सर्गः । तस्य च—

> अभिषेके विप्रपादक्षालने वामतो भवेत् ।

इत्यपवादः । अयं चापवादो नित्यः । तत्रापवादस्थल उत्सर्गानुसरणेन पत्नी दक्षिणतश्चेद्दोष एव स्यात् । यथाऽत्र ' नानृतं वदेत् ' इत्युत्सर्गः । तस्य च—

> प्राणात्यये विवाहे च नानृतेन प्रदुष्यति ।

इत्यपवादः । अयं चापवाद ऐच्छिकः । प्राणात्यये विवाहे चोत्सर्गानु-

सरणेनानृतवदनाभावेऽपि दोषाभावात् । यथा च स्नाने सशिरस्कत्वमुत्सर्गः । अशक्तविषयेऽशिरस्कत्वमपवादः । अयमप्यैच्छिक एव । अशक्तेन सशिरस्कस्नाने कृतेऽपि दोषाभावात् । तत्र विधिप्रत्ययसत्त्वे नित्यापवादो ज्ञेयः । यथा वामतो भवेदिति । न दुष्यति न दोष इत्येतावन्मात्रोक्तौ वैच्छिकापवादो ज्ञेयः । उत्सर्गाननुसरणे दोषाभावोक्तिरुत्सर्गानुसरणं नैव निषेधति । क्वचिच्च तथाविधापवादस्थल उत्सर्गसमुच्चायकोऽपिशब्दो दृश्यते । तत्र यथा नित्यापवादः स्वविषय उत्सर्गसत्तां बाधत एव, न तथैच्छिकः । ऐच्छिकापवादस्तु स्वविषय उत्सर्गाननुष्ठानं चेत्तत्र केवलमनुज्ञां ददत्स्वविषयेऽप्युत्सर्गं प्राधान्येन संग्राहयत्येव । मुमुक्षुः पतिना हीनेति प्रकृतो वपनापवादस्त्वैच्छिकः विधेरदर्शनात् । या भवेत्केशधारिणीति वाक्यस्य यच्छब्दघटितत्वेनानुवादरूपत्वात् । उत्सर्गाननुष्ठानस्यानुज्ञाबोधकाद्दोषो नास्तीति लिङ्गाच्च । तथा च मुमुक्षोर्विधवायाः कुतश्चित्कारणाज्जायमाने केवलमनुज्ञां ददात्ययमपवाद इति स केशवपने पापं सूचयतीति दूरापास्तमेवेति विभावनीयम् ।

अथात्रेदं विचार्यते—येयमैच्छिकापवादेन स्वविषय उत्सर्गाननुष्ठानसमनुज्ञा दीयते साऽमुकस्थल एव ग्राह्येत्यत्र किं नियामकमस्ति न वा । अस्ति चेदुच्यताम् । नास्ति चेदत्र क्वापि विवाहेऽनृतयाऽपि वाचा प्रकृत्यैवान्तरायं चिकीर्षवस्तदर्थं बद्धपरिकरा निष्कारणवैरिणः । शठा ' विवाहेऽनृता वाङ् न दोषाय ' इत्येवमैच्छिकापवादं समाकर्ण्य नर्तयेयुः । उच्यते—

> चिकीर्षिते यदा कार्ये उत्सर्गाद्विघ्नसंभवः ।
> तदोत्सर्गपरित्यागसमनुज्ञोपयुज्यताम् ॥

तथा च नानृतं वदेदित्युत्सर्गानुसरणेन विवाहे प्रयुक्ता सत्या वाङ् नैव दोषाय भवति । किंतु यदि कुतश्चित्कारणात्समुत्पन्नो विवाहान्तरायोऽनृतया वाचा विनश्येत चेत्तत्रोत्सर्गपरित्यागेनानृतवाक्प्रयोगस्यानुज्ञा दीयते । सत्यया वाचा विवाहान्तरायसंभवश्चेत्तत्र मौनमेवाऽऽस्थीयताम् । यत्रानृतां वाचमन्तरेण विवाहान्तरायविनाशासंभवस्तत्रैवानृतवागनुज्ञेति सिद्धम् । अशक्तस्याशिरस्कस्नानविषयेऽप्येवमेव । स्नानं हि विहितकर्माधिकारसिद्ध्यर्थं क्रियते । यदि चाशक्तेन सशिरस्कस्नाने कृते तज्जन्यपीडां सोढुमसमर्थेन कर्मैव कर्तुं न शक्यते चेत्तस्याशिरस्कस्नानानुज्ञा । एवं प्रकृतेऽपि बोध्यम् । मुमुक्षुर्हि मोक्षार्थमहर्निशं प्रयतते । तादृश्याश्च विधवाया अहर्निशं तदर्थं प्रयतमानाया यदीत्थं मतिः स्यात्केशवपनेन प्रयत्ने विघ्नसंभव इति तादृश

संभवाभिप्रायेण च यदि केशधारणे सा प्रवर्तेत तर्हि वपनपरित्यागो न दोषायेत्येवं समनुज्ञा नान्यत्रेति । एवं च मुमुक्षोरपि विधवाया औत्सर्गिकं केशवपनं सिद्ध्येवेति सुधीभिरूह्यम् ।

केशानां च पापाश्रयत्वेन केशधारणे पातकसंभावनया दोषकल्पनं युक्तं भवेन्न तु कथमप्यधारणे। अपि च मुमुक्षोर्वैराग्यसंपन्नायाः कर्मण्यहंभावाभावेन पातकसंभावनाया असत्त्वेन केशधारणेऽपि न दोष इति 'मुमुक्षुः पतिना हीना' इति वृद्धमनुवचनोपपत्तिर्ज्ञेया । एवमेव यस्या दीक्षाऽस्ति वैष्णवी साऽजस्र नारायणार्चनैकप्रवणतया कर्मान्तरेऽनासक्तेति तस्याः पातकसंभावनाया अभाव इत्यभिप्रायेण—

स्त्रीणां तु भर्तृहीनानां वैष्णवीनां वसुंधरे ।
यावच्छरीरपातं हि प्रशस्तं केशधारणम् ॥
न कार्यं केशवपनं वैष्णव्या भर्तृहीनया ॥

इत्यादिवचनानि योजनीयानि । यानि च वचनानि वपननिषेधबोधकानि सांप्रतं प्रदर्श्यन्ते तानि यथाऽनुपूर्व्या प्रदर्शितानि तथाऽऽनुपूर्व्या निबन्धग्रन्थेषु नोपलभ्यन्ते । अतस्तत्र प्रामाण्यसंदेह एव भवति । कानिचित्तु पाठभेदं प्रकल्प्य प्रदर्शितानीव दृश्यन्ते, तानि च यथायथं प्रदर्शयिष्यामः । यत्तु—

सकच्छं वर्णितं भिक्षुं विकच्छं गृहमेधिनम् ।
विकेशां विधवां दृष्ट्वा सवासा जलमाविशेत् ॥

इति वचनमुपन्यस्यते, तत्र 'सकेशां' इत्येव पाठः । विकेशामित्यपपाठः । विस्तीर्णकेशामित्यर्थेन वा योजनीयः ।

'सकेशां विधवां दृष्ट्वा सचैलं स्नानमाचरेत्'

इत्यभियुक्तोक्तिसंवादश्च 'सकेशाम्' इति पाठमेवोद्बलयति । यदि च भिक्षोः कच्छनिषेधकं गृहस्थाश्रमिणः कच्छावश्यकत्वबोधकं च वचनं यथोपलभ्यते तथा सामान्यतो विधवानां केशधारणविधायकं वचनमुपलभ्येत तर्हि विगतकेशामित्यर्थको विकेशामिति पाठः साधीयान्स्यात् ।

यच्च—

प्रपन्ना भर्तृहीना तु गुरूणामुपदेशतः ।
न धारयति या केशान्पाति सा नरकं ध्रुवम् ॥

इति वचने, पातीत्यस्य स्थाने यातीति पाठं प्रकल्प्यैपद्धैकितम्, तत्रेत्थमुच्यते—अत्रोत्तरार्धे केशधारणाभावो नरकप्राप्तिहेतुत्वेनोक्त इति प्रतीयते। तत्र 'गुरूणामुपदेशतः' इत्यस्यान्वयो न संभवति। नहि नरकप्राप्तिहेतोरुपदेशो गुरुभिः क्रियत इति युक्तिमत्। अतो यातीत्यपपाठ एव। पातीत्येव तत्र पाठः साधुः। पातीत्यस्य रक्षतीत्यर्थः। 'पा रक्षणे' इति पाणिनिस्मृतेः। नरकात्स्वं रक्षतीत्यर्थे नरकं पातीति प्रयोगो लोकोक्त्यनुवादः। यथा महाराष्ट्रभाषायां मार्जारेभ्यः पयांसि रक्षितव्ये मार्जारान् रक्षेत्युच्यते तद्वत्। यथा वा कोमलकणिशादियुते क्षेत्रगते यावनालादिसस्ये पक्षिभ्यः सकाशात्परिरक्षितव्ये 'पक्षिणो रक्ष' ( पांखरें राख ) इत्युच्यते व्यवहर्तृभिः। प्रसिद्धश्चायं व्यवहारः सर्वत्रेति। अयमर्थः—भक्त्यतिशयः प्रपत्तिः। तद्युक्ताऽपि स्त्री भर्तृमरणे गुर्वनुज्ञासारेण कृतवपनाचेतसा नरकात्स्वमात्मानं रक्षतीत्यर्थः।

अत्रेदमनुसंधेयम्—वपनं द्विविधम्। याद‍ृच्छिकं विहितं च। तत्र याद‍ृच्छिकं तपश्चर्यादौ जटाधारणविधानेन सुवासिनीनां केशरञ्जनविधानेन च निषिध्यते। पूर्णे प्राजापत्ये क्षौरमित्यादिस्मृतिभिः प्रायश्चित्ताङ्गतया विहितं च 'न स्त्रीणां केशवपनम्' इत्यादिना निषिध्यते। न च वपनरूपस्याङ्गस्य लोपादङ्गिनि प्रायश्चित्ते न्यूनता स्यादिति वाच्यम्। ताद‍ृशनिषेधसमीप एव वपनप्रतिनिधितया द्व्यङ्गुलच्छेदविधानात्। सुवासिनीकृतकर्मजन्यस्य पातकस्य भूयसांऽशेन भर्तरि संक्रमेणावशिष्टस्य स्वल्पस्य पातकस्य द्व्यङ्गुलच्छेदमात्रेण निरालम्बनत्वसिद्धिरिति 'सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलिद्वयम्' इति पराशरवचनस्य तात्पर्यमवसेयम्।

तथा केशसंरक्षणं द्विविधम्। याद‍ृच्छिकं विहितं च। शिखारूपकेशधारणं तु विहितम्। ताद‍ृशविधिबलाच्च प्रायश्चित्ताङ्गे पितृमरणनिमित्तके च क्षौरेऽपि शिखाया वपनं न क्रियते। किंतु शिखातिरिक्तमेव। अतः प्रायश्चित्तादिषु नाङ्गवैकल्यम्। नापि शिखाधारणविधिविरोधः। विषयभेदेन द्वयोश्चारितार्थ्यात्। विधेर्विषयः शिखा। तं विषयं परित्यज्यान्ये केशा वपनस्य विषय इति। अनेनैव न्यायेन 'वपेद्भुक्तवतः केशान्' इत्याश्वलायनस्मृतौ ( १० । ३ ) उपनयने पूर्वाङ्गत्वेन विहितं वपनमपि शिखातिरिक्तविषयं वेदितव्यम्। यत्र तु हठाद्विहितमेव शिखावपनं तत्र ताद‍ृशविधेश्चारितार्थ्याय भवतु शिखाया अपि वपनम्। यथा गोवधप्रकरणे 'सशिखं तु निपातने' इति।

सुवासिनीनां केशरञ्जनविधानेन यत्केशसंरक्षणं जायते तदप्यानुमानि- कविधिबलाद्विहितमेव । किंतु तत्र शिखाया अविधानेन विषयभेदेन द्वयो- श्चारितार्थ्यं दुर्वचम् । आनुमानिकविधेर्वपनस्य च सर्वांशेन प्रवृत्तत्वात् । तथा च वपनविधेः केशरञ्जनविधेश्च समावेशासंभवाद्विकल्पः स्यात् । विकल्पस्त्वव्यवस्थितः । तत्र च द्वयोरपि विध्योः पाक्षिको बाधः स्यात् । स चाष्टदोषग्रस्तत्वान्नेष्यते, अतोऽत्र केनापि प्रकारेण समावेशो वाच्यः । स च कथं कार्य इति चेदत्र पराशरः—

वपनं नैव नारीणां नानुव्रज्या जपादिकम् ।
न गोष्ठे शयनं तासां न वसीरन्गवाजिनम् ॥
सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलिद्वयम् ॥ इति ।

अत्र नारीणां सुवासिनीनां वपनं नैवेति वपननिषेधाङ्गीकारद्वारा केशरञ्जनविधेश्चारितार्थ्यं प्रदर्श्य वपनप्रतिनिधित्वेनाङ्गुलिद्वयच्छेदबोधने- नाङ्गिनोऽङ्गवैकल्यं परिहृतम् । यत्र तु पादकृच्छ्रप्रायश्चित्तेऽङ्गरोममात्रवपन- मुक्तं पादेऽङ्गरोमवपनमिति तत्र स्त्रीणां वपननिषेधमात्रमेव शङ्खस्मृतावुक्तम्—

जन्मरोमाणि या नारी क्षौरं कर्म समाचरेत् ।
कन्या वा विधवा वाऽपि रौरवं नरकं व्रजेत् ॥ इति ।

न त्वीदृशे विषये रोमवपनप्रतिनिधित्वेनान्यत्किंचित्प्रकल्प्यते । पात- कस्यातिक्षुद्रत्वेन प्रायश्चित्तमात्रेण तन्निरासंभवात् ।

अथात्रेदं विचार्यते—वपनं नैव नारीणामिति पराशरवचनान्तर्गत एव- कारः किं नियमं बोधयति परिसंख्यां वा । तदितरत्र विधौ निषेधे वैवका- रस्यानपेक्षणात् । नियमे हि पाक्षिकस्य सार्वदिकत्वं बोध्यते । परिसंख्यायां तु सार्वत्रिकप्राप्तस्येतरव्यवच्छेदतात्पर्यकत्वं कल्प्यते । उक्तवचने चैवकारो नञा संबद्ध इति नञ्प्रोत्थस्य वपननिषेधस्य पाक्षिकी सार्वत्रिकी वा प्राप्तिर्वक्तव्या भवति । तत्र सुवासिनीनां केशरञ्जनविधानेन नाप्राप्तत्वा- त्केशसंरक्षणस्य तादृशविधिबलप्रकल्पितो यादृच्छिकस्य वपनस्य निषेधः प्राप्नोति । प्रायश्चित्ताद्यङ्गतया वपनस्य विधानात्केशवपनमपि प्राप्नोति । तत्र केशसंरक्षणस्य केशवपनस्य च समुच्चयासंभवाद्विकल्पो वक्तव्य इति वपननिषेधस्य पाक्षिकी प्राप्तिः संभवति न तु सार्वत्रिकीति नात्र परिसंख्या, किंतु नियम एव । एवं च पाक्षिकप्राप्तस्य वपननिषेधस्य

सार्वत्रिकत्वं बोधयतोऽस्य नियमस्य सुवासिनीष्वेव प्रवृत्तिर्न विधवासु । तत्र वपननिषेधस्य प्राप्त्यभावात् । तत्र केशरञ्जनविधानाभावेन वपननिषेध-प्रकल्पकाभावात् । किंच नारीशब्देन विधवानां ग्रहणमेव न भवति । नारी-शब्दस्य स्वाभाविकी शक्तिः सुवासिन्यामेव न तु स्त्रीमात्रे । अत एव—

जन्मरोमाणि या नारी क्षौरं कर्म समाचरेत् ।
कन्या वा विधवा वाऽपि रौरवं नरकं व्रजेत् ॥

इति शङ्खस्मृतौ नारीतः पार्थक्येन कन्यानां विधवानां चोल्लेखः संग-च्छते । अत्र रोम्णां छेदो निषिध्यते न तु केशानामित्यन्यत् । नारीश-ब्दस्य निर्वचनेनापि सभर्तृका स्त्रीत्येवार्थो लभ्यते । नुर्नरस्य वा धर्म्या नारी । नृशब्दात् ' ऋतोऽञ् ' ( पा० सू० ४ । ४ । ४९ ) इत्यनेन तस्य धर्म्यमित्यर्थेऽञ्प्रत्ययः । नरशब्दात्तु तत्रत्यवार्तिकेन तस्मिन्नेवार्थेऽञ्प्र-त्ययः । धर्मादनपेतं धर्म्यम् । धर्मोऽनुवृत्त आचारः । तथा च या नरस्य सहधर्मचारिणी सा नारीत्युच्यते । नायं नारीशब्दः कुमार्यां प्रवर्तते । नापि विधवायाम् । सहधर्मचारित्वासंभवात् । उपलक्षणतया व्याख्यानं त्वन्यथानुपपत्तावेव ग्राह्यं भवति ।

' आनन्दिता यत्र नार्यो रमन्ते तत्र देवताः '

इत्यत्र सुवासिनीनामेव परिग्रहः सर्वसंमतः । एवं च पराशरवचने ' एवं नारीकुमारीणाम् ' इति पाठे नारीशब्दात्पृथक्कुमारीणामुल्लेखो युक्त एव । तदुक्तं पराशरव्याख्यायां माधवाचार्यैः—स्त्रीणां तु वपने विशेषमाह—

सर्वान्केशान्समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।
एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम् ॥ इति ।

नारीग्रहणेनैव कुमारीणामपि ग्रहणे सिद्धे पृथगुपादानं विधवासु वपनाङ्गीकारद्योतनार्थम् । नात्र नारीशब्दः स्त्रीमात्रवाची । किंतु सभर्तृक-स्त्रीवाची । कुमार्यस्तु विवाहरहिताः । तथा च सभर्तृकाणां विवाहरहितानां चैतदुक्तं भवतीति । अयमर्थः—नारीग्रहणेनैवेति । लक्षणया नारीश-ब्दार्थो गृह्यते तर्हि कुमारीणां संग्रहः स्यात् । स च नेष्यते । अतोऽत्र नारी-शब्दः शक्यार्थप्रतिपादक एव ग्राह्यः । लक्षणा तु जघन्यवृत्तिः । तदाह—नात्र नारीशब्द इत्यादि । युक्तं चैतत्—विधवाभिः केशधारणे तासां प्रत्यहं स्नानमेव न भवति । अशिरःस्नानं तु सुवासिनीनामेव विधीयते । न तु स्त्रीमात्रस्य । तदुक्तं स्मृत्यर्थसारे—

यत्र पुंसः सचैलं स्यात्स्नानं तत्र सुवासिनी ।
कुर्वीतैवाशिरःस्नानं शिरोरोगी जटी तथा ॥ इति ।

अत्र सुवासिनीतिवचनाद्विधवायाः सर्वदैव शिरःस्नानमिति कमलाकरः । अतो वपनमेव विधवानां युक्तम् । किंच नीलवस्त्रधारणमपि विधवानां निषिद्धम् । तदुक्तमापस्तम्बेन—

मृते भर्तरि या तु स्त्री नीलवस्त्रं विधारयेत् ।
तावद्भर्ता वसेत्तस्या नरके नात्र संशयः ॥ इति ।

अङ्गिरसाऽप्युक्तम्—

मृते भर्तरि या नारी नीलीवस्त्रं प्रधारयेत् ।
भर्ता तु नरकं याति सा नारी तदनन्तरम् ॥ इति ।

यत्तु शाण्डिल्यवचनं भर्तुर्मृतौ भार्याया वपनं न कार्यमित्यंशे साधकतयोपन्यस्तम्—

मुण्डनं मधुपर्कं च ताम्बूलं कुङ्कुमादिकम् ।
मैथुनं पुरुषाणां च भाषणं कुसुमादिकम् ॥
भर्तृहीना च या नारी ह्यापद्यपि विवर्जयेत् । इति ।

अत्रोच्यते—अन्तर्वत्न्यां भार्यायां पुत्रजन्मादिशुभोदर्के कालेऽशुभावहाः पदार्थाः परित्याज्यत्वेन कथ्यन्ते—

मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।
न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव वा ॥ इति ।

अशुभावस्थायां शुभावहाः पदार्थाः परित्याज्यत्वेन कथ्यन्त उक्तशाण्डिल्यवचने । तत्र मधुपर्कताम्बूलादयः शुभावहा ये पदार्थास्तत्सहभावेनात्र मुण्डनोक्तिरसंगता । अतस्तत्र ‘ मण्डनं मधुपर्कं च ’ इत्येव पाठः साधीयान् । यत्तु खगेश्वरसंहितास्थं वचनं विधवावपननिषेधकमुपन्यस्तम्—

प्रयोजनान्तरसंसक्ता विधवा वापयेच्छिरः ।
मुमुक्षुर्यदि सा तस्या वपनं तु निषिध्यते ॥ इति ।

नेदं वचनं सर्वसाधारणं विधवानां वपननिषेधकम् । किंतु मुमुक्षुर्या

विधवा तस्या एव न त्वन्यासाम् । प्रत्युतान्यासां वापयेदित्यनेन वपनविधिरेव प्रतीयते । प्रयोजनान्तरेत्यत्रान्तरपदस्य प्रतियोग्याकाङ्क्षायां मुमुक्षुपदादुपस्थितो मोक्ष एव प्रतियोगित्वेन संबध्यते न त्वन्यः कश्चित् । उपस्थितं परित्यज्यानुपस्थितकल्पनाया अन्याय्यत्वात् । ननु सांप्रतं विद्यमानाः सर्वा विधवा मुमुक्षव एवेति चेत्—किमियं मुमुक्षुपदान्तर्गतसन्प्रत्ययप्रतिपाद्येच्छा केवलं मोक्षविषयकमिच्छामात्रमथवा तद्विशेषः कश्चित् । नाऽऽद्यः । तादृशेच्छामात्रस्यावर्जनीयत्वेन 'मुमुक्षुर्यदि सा तस्याः' इत्यत्र संभावनाद्योतकस्य यदीत्यस्याऽऽनर्थक्यापत्तेः । प्रयोजनान्तरेतिपूर्वार्धस्य निर्विषयत्वापत्तेश्च । द्वितीये तु स इच्छाविशेषः कीदृश इति वक्तव्यम् । इच्छाजन्यो य इच्छाकार्यभूतः प्रयत्नस्तदारम्भिका तथेति चेत्—क्षणं क्रियमाणं पुराणश्रवणाद्यपि तत्कार्यत्वेन परिगृह्येत । इष्टापत्तिरिति तु न भ्रमितव्यम् । यतः पूर्वार्धे मोक्षव्यतिरिक्तप्रयोजनसंसक्तत्वमुद्देश्यतावच्छेदकतयोपादीयते । न तु तत्र मोक्षसंसक्तत्वं निषिध्यते । तथा च मोक्षसंसक्ता तदसंसक्ता वेति द्विविधाऽपि 'मोक्षव्यतिरिक्त प्रयोजनसंसक्ता पूर्वार्धे परिगृह्यते । अन्यथा मोक्षेच्छावती या प्रयोजनान्तरसंसक्ता तस्या असंग्रहेण न्यूनतापत्तेः । उत्तरार्धे तु मोक्षैकप्रवणा परिगृह्यते । यदि च प्रयोजनान्तरसंसक्ताऽपि मुमुक्षुपदेनोत्तरार्धे परिगृह्येत तर्हि मुमुक्षुपातिद्वंद्वितया पूर्वार्धे समुच्चारितस्य प्रयोजनान्तरसंसक्तेत्यस्यासंगतिः स्यात् । तथा च मोक्षैकप्रवणैवात्रोत्तरार्धे मुमुक्षुपदेन परिग्रहीतव्या भवति । सा चेत्थं परिशीलनीया—

> यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ।
> सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥

इत्यनुसंधाय—

> तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
> एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ' ॥

इत्युक्तदिशा वर्तमाना । तथा च सांप्रतं गृहकार्यनिमग्नानां विधवानां न कथमप्यत्र मुमुक्षुपदेन संग्रह इति सिद्धम् । अतस्तासां विधवानां सर्वासां स्त्रीणां

> प्रयोजनान्तरसंसक्ता विधवा वापयेच्छिरः ।

इति खगेश्वरसंहितास्थवचनानुसारेण वपनमावश्यकमिति ज्ञेयम् । युक्तं चैतद्भार्यया कृतं पापजनकं यत्कर्म तद्भूयसांऽशेन तद्भर्तरि संक्रामति । यतो

भार्याया भर्तृपारतन्त्र्येण भार्याकृतस्य कर्मणः प्रयोजकोऽनुमन्ता च भर्ता भवत्येव । पापं च—

' यत्किंचित्क्रियते पापं सर्वं केशेषु तिष्ठति ' ।

इत्यापस्तम्बस्मृतिवचनानुसारेण केशानाश्रित्य तिष्ठतीत्याश्रयणीयम् । वपनसंकल्पोऽप्येतदनुसार्येव—

यानि कानि च पापानि जन्मान्तरकृतानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥ इति ।

पापं च सर्वदा निरसनीयमेव भवति । तत्र स्वकृतकर्मजन्यं विद्यमानं यत्पापं तत् तन्मरणोत्तरं तादृशजीवात्मसंयुक्तं भवति । भार्याकृतकर्मजन्यं यत्पापं प्रयोजकत्वेनानुमन्तृत्वेन च प्राप्तं तदप्यंशेन तादृशजीवात्मसंयुक्तं भवति । किंत्वंशेन भार्यायां संक्रामति । तत्केशाश्रितमिति केशवपनमावश्यकम् । एवमेव पितृमृतौ पुत्रस्य वपनमावश्यकम् । पापं च स्वल्पतरं स्वल्पं महन्महत्तरं चेत्यनेकविधम् । यथा च लोके दुर्गाश्रितः क्षुद्रो रिपुर्दुर्गविध्वंसनमात्रेण विनश्यति । बलवांश्चेत्प्रथमतस्तं दुर्गविध्वंसनेन निरालम्बं क्षीणबलं कृत्वा पश्चात्स शस्त्रादिनोच्छेद्यो भवति । तथा स्वल्पं क्षुद्रं पापं केशवपनेन निरालम्बं विनश्यति । बलीयश्चेद्वपनेन निरालम्बं सत्प्रायश्चित्तादिना विनश्यति । तत्राज्ञानकृतं विनश्यति, ज्ञानकृतं तु सुदूरमपैतीत्यन्यदेतत् । एतेन वपनेन पापनाशश्चेत्प्रायश्चित्तोपदेशो व्यर्थः । न चेत्किं वपनेनेत्यपास्तम् । यच्च विधवावपननिषेधकं शंभुवचनम्—

भर्तुर्मृतौ तु भार्या च प्रकुर्याद् वपनं विना ।
दाहादिपिण्डपर्यन्तं प्रेतकार्यं यथाविधि ।
येषु केषु च कार्येषु न स्त्री क्षौरं समाचरेत् ॥ इति ।

तत्रोच्यते—वपनं विनेत्यनेन यो वपनस्य निषेध उच्यते तत्र निषेधस्य प्राप्तिपूर्वकत्वात्तत्र वपनस्य प्राप्तिर्वक्तव्या । सा च किं यादृच्छिकी, विधिबललभ्या वा । नाऽऽद्यः । भर्तृमरणावस्थायां भार्याया यादृच्छिकवपनप्राप्तेः सुतरां दुर्वचत्वात् । द्वितीये त्वया वपनविधायकवचनानामप्रामाण्याङ्गीकारात् । प्रामाण्ये च विहितप्रतिषिद्धतया विकल्पो दुर्वारः । अथायं वपननिषेधो यत्र भार्यायाः प्रेतकार्यकर्तृत्वं तत्रैव ।

वपनं विना दाहादिपिण्डकार्यं प्रकुर्यादित्युक्तेः । वपनविधिस्तु यत्र पुत्रादिसत्त्वेन प्रेतकार्यकर्तृत्वाभावस्तत्रेत्येवं विषयभेदेन विधिनिषेधयोः सावकाशत्वमिति चेत्—एतदपि त्वया नेष्यते । नाप्येतदुपपत्तिमत् । प्रत्युत भर्तुः प्रेतकार्यकर्तृत्वे वपनमावश्यकमिति । अतोऽत्र—

'भर्तुर्मृतौ तु भार्या च प्रकुर्याद्वपनं तथा'

इत्येव पाठः साधीयान् । भर्तुर्मृतौ त्विति तुशब्दः प्रागवस्थाव्यवच्छेदे । भर्तरि जीवति प्रायश्चित्तादिविध्यङ्गतया प्राप्तमपि वपनं निषिद्धमिति तादृश्यवस्था भर्तृमरणे तुशब्देन व्यवच्छिद्यते । न चात्र प्रेतकार्यकर्तृत्वसहभावेन वपनविधानात्पुत्रादिसत्त्वेन तत्कर्तृत्वाभावे वपनविधिर्नास्तीति भ्रमितव्यम् । यतोऽत्र वाक्यभेदेन वपनं प्रकुर्यादिति वपनं विधीयते । न तु वपनं कृत्वा दाहादि कुर्यादित्येवमेकवाक्यतयाऽत्रोच्यते । 'विधवाकबरीबन्धो भर्तृबन्धाय जायते' इति स्कान्दस्मृतेः सामान्येन प्रवृत्तिदर्शनाच्च ।

यच्च वपननिषेधकं मनुवचनमित्युदाहृतम्—

कन्या वा विधवा वाऽपि वपनं च समाचरेत् ।
कल्पकोटिसहस्राणि रौरवं नरकं व्रजेत् ॥
भर्तृहीना तु या नारी मोहाद्वपनमाचरेत् ।
कुलद्वये पितॄणां तु वक्त्रे रोमाणि वास्यति ॥ इति ।

अत्र रोम्णामेव वपनं निषिध्यते, न तु केशानाम् । वपनाचरणे पितॄणां वक्त्रे रोमाणि वास्यतीति रोमप्रवेशनदोषोक्तेः । अत्र वचने विधवा वाऽपीत्यपिशब्देन सधवायाः परिग्रहः । तथा च त्रिविधानामपि स्त्रीणां रोमवपने नरकपातो दोष उक्तः । रोमवपनं च यादृच्छिकं वा पादप्रायश्चित्तादौ तदङ्गतया प्राप्तं वेति द्विविधमपि निषिध्यते । तत्र भर्तृहीनायामधिको विशेषो वक्त्रे रोमप्रवेशदोष उक्तः ।

यच्चान्यन्मनुवचनमुक्तम्—

भर्तृहीना तु या नारी मुण्डयित्वा समाचरेत् ।
श्रौतस्मार्तानि कर्माणि रौरवं नरकं व्रजेत् ॥ इति ।

एतच्च मनुवचनमिति न केनापि निबन्धकारेणोद्धृतम् । किंच स पाठः साधुरेव न भवति भर्तृयुक्ता तु इति वा पाठः स्यात् । 'भर्तृहीना

तु नारी याऽमुण्डयित्वा ' इति वा पाठः स्यात् । अथवा ' नरकं व्रजेत् ' इति वाक्यस्यान्यथेत्यादिर्वा कल्प्यः स्यात् । इतरथा तुशब्देन यस्या व्यवच्छेदो वाच्यः सा भर्तृहीनापेक्षयाऽन्या कीदृशीति वक्तव्यम् । यया मुण्डयित्वा कृतेऽपि कर्मणि नरकपातो न भवति ।

अपरं चात्रेत्थमुच्यते–'रौरवं नरकं व्रजेत्' इत्यनेन निषेधो बोध्यत इति सर्वसंमतम् । निषेधवाक्ये च क्त्वाप्रत्ययान्तपदोच्चारण उत्तरकालिकया एव निषेधो न तु क्त्वाप्रत्ययप्रकृतिभूतधातूपस्थाप्याया अमुख्यायाः क्रियायाः । नापि तस्यास्तत्र विधिः । प्रमाणाभावात् । तस्याश्चामुख्यायाः क्रियाया वचनान्तरे विधिर्वा भवतु निषेधो वा भवत्वौदासीन्यं वा स्यादित्यन्यदेतत् । यथा—न भुक्त्वा न नक्तं प्रब्रूयाद्ब्रह्मराशिमित्यत्र केवलं भोजनोत्तरकालिकाक्षरसमाम्नायप्रवचननिषेधो बोध्यते । भोजनस्य त्वनेन वाक्येन न निषेधो नापि विधिः । यथा वा ' आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ' इत्यत्र गुरुदक्षिणाप्रदानोत्तरकालिकप्रजातन्तुव्यवच्छेदस्य निषेधो बोध्यते । गुरुदक्षिणाप्रदानस्य त्वनेन वाक्येन न निषेधो नापि विधिः । अत्र गर्भित आर्थो विधिरेव भवतीति श्रुत्यर्थसंप्रदायवेदिनः । प्रकृते च मुण्डनोत्तरकालिकश्रौतस्मार्तकर्माचरणनिषेधो बोध्यते, न तु क्त्वाप्रत्ययप्रकृतिभूतधातूपस्थाप्याया मुण्डनक्रियायाः । प्रत्युत प्रियं धनमाहृत्येत्यादाविव मुण्डनक्रियाया आर्थो विधिरेवात्र प्रतीतः स्यादिति । एवं च तात्पर्यनिर्णायकषड्विधलिङ्गानुसंधानेन साधकबाधकसर्ववाक्यानां विचारे क्रियमाणे स्त्रीणां विधवानां वपनं सर्वथा शास्त्रविहितत्वादत्यावश्यकमिति सिध्यति । शिष्टाचारोऽप्यत्रैवानुकूलः । एतेन विधवावपनं न शास्त्रविहितं, प्रत्युत शास्त्रनिषिद्धमेवेत्यादि शास्त्रविरुद्धं यद्वा तद्वा प्रलपन्तो नास्तिकप्राया एवेति निरसनीया वेदितव्याः ।

नन्वेवं भवतु विधवावपनं शास्त्रविहितं, तथाऽपि न श्रौतं किंतु स्मृत्युक्तम् । स्मृतयश्च स्मृतिकाले तदा तदा तादात्विकीं लोकरूढिमनुसृत्य स्मृतिकारैर्विरचिता इति नाद्यत्वे प्रमाणं ता भवितुमर्हन्तीति चेत्—तादृशकल्पनायां प्रमाणाभावात् । यो ह्यप्रमाणं ब्रूयात्स्वादो गृह्येन । अप्रमाणकल्पनायां

विपरीतस्यापि वक्तुं शक्यत्वात् । किंच तथात्वे स्मृतिरिति शब्दोऽपि न संगच्छते । स्मरणात्स्मृतिरिति हि स्मृतिशब्दनिर्वचनम् । स्मरणं च श्रुत्यर्थस्यैव । तच्च द्विविधम् । क्वचिच्छ्रुत्यनुपूर्वीस्मरणपूर्वकं तदर्थस्मरणम् । क्वचिच्च श्रुत्यनुपूर्व्यस्मरणपूर्वकं केवलमर्थस्मरणम् । किंच स्मृतीनां प्रामाण्यं प्रमाणाध्याये श्रुतिबलान्निर्णीतम् । आचारस्य प्रामाण्यं तु श्रुतिस्मृत्येतदुभयबलात् । तथा चाऽऽचारस्य प्रामाण्यमेव स्मृतिमूलकं चेत्तद्विरुद्धमाचारमूलकत्वं स्मृतेः सुतरां न संभवति । अन्योन्याश्रयग्रस्तत्वादिति बोध्यम् । तदेवं श्रुतिस्मृतिसदाचारैतत्प्रमाणत्रितयमूलकं विधवावपनमिति सिद्धम् । ततश्च सर्ववाक्याविरोधेन सिद्धस्य विधवावपननिर्णयस्यायं संग्रहः—'विधवाकबरीबन्धो' इत्यादीनि स्मृतिवचनानि सुस्पष्टं विधवाकेशवपनविधायकानि । 'मुमुक्षुः पतिहीना या' इत्यादीनि केशसंधारणानुज्ञाबोधकानि मुमुक्षुविधवाविषयकाणि । सांप्रतं गृहस्थितौ वर्तमानानां भर्तृविरहितानां स्त्रीणां मध्ये न कस्याश्चिदपि मुमुक्षुत्वसंभवोऽस्ति । केशरञ्जनविधायकानि, 'आनन्दिता यत्र नार्यो' इत्यादीनि च देवतारमणाधिकरणत्वबोधकानि सौभाग्ययुक्तस्त्रीपराणि । अङ्गुलिद्वयपरिमितकेशच्छेदविधायकानि तु कुमारीसुवासिनीत्येतदुभयपराणि । अन्यानि कानिचिद्वपननिषेधाभासयुक्तानि निबन्धकारानुद्धृतानि विपर्यस्तान्यर्थासांगत्यादिदोषग्रस्तानि । तत्रापि यानि खगेश्वरसंहितास्थवचनसदृशानि बहुशो वचनानि विधवावपननिषेधविषये नारायणास्त्राणीत्युल्लिखितानि तानि विधवानारीवपनविधावेव प्रत्युत दृढान्यस्त्राणीत्यहो आन्ध्यं विधवावपनं शास्त्रनिषिद्धमिति वल्गनां कुर्वतां केषांचिदज्ञानाम् । एवं च विधवावपनस्य दृढतरं शास्त्रानुसंहितत्वे स्थिते, तदभावे 'हव्यं देवा न गृह्णन्ति' इत्यर्थसिद्धमशुचित्वमिति ।

तदेवं सगोत्रापरिणयोऽस्पृश्यस्पर्शो विधवाकेशसंधारणं चेति त्रयं शास्त्रनिषिद्धमिति मत्वा तदनुसारेण सर्वदा वर्तितव्यं मनीषिभिः । श्रीपरमेश्वरश्च सद्बुद्धिप्रदानेनताननुगृह्णात्विति शिवम् ॥

इत्थं दत्तकगोत्रपालनविधावस्पृश्यसंस्पर्शने
विश्वस्ताकचभारवापनविधौ तत्त्वं विजिज्ञासवः ॥

श्रुत्यादिप्रबलप्रमाणनिचये बद्धादराः संततं
ये च स्युः परिशिष्टलेखनविधिस्तेषां कृतेऽङ्गीकृतः ॥ १ ॥
धर्मतत्त्वमिदं गूढं निरणायि यथामति ।
सुधियामवबोधार्थं तेन तुष्यतु शंकरः ॥ २ ॥
धर्मतत्त्वं स्वयं ज्ञात्वा सदाचरणतत्पराः ।
श्रद्धालवोऽनभ्यसूयाः परान्संबोधयन्त्विदम् ॥ ३ ॥
धर्मतत्त्वं परं भक्त्या समर्प्य गुरुपादयोः ।
वासुदेवः स्वजनुषः साफल्यं लब्धुमीहते ॥ ४ ॥

इति श्रीमन्महामहोपाध्यायाभ्यंकरोपाह्ववासुदेवशास्त्रिविरचितं
धर्मतत्त्वनिर्णयपरिशिष्टं समाप्तम् ॥



॥ श्रीः ॥



# अथ धर्मतत्त्वनिर्णयपरिशिष्टे प्रसङ्गादुद्धृतानां श्रुत्या-दीनां सूचीपत्रम् ।

समाप्तेयं धर्मतत्त्वनिर्णयपरिशिष्टस्थानां श्रुत्यादीनां सूची ।

====